आनन्दाश्रमसंस्कृतग्रन्थावलिः ।
ग्रन्थाङ्कः १२३

पारमेश्वरव्याख्यासंवलितं

# लघुमानसम् ।

---

तदेतत्
श्रीयुत ' बलवंत दत्तात्रेय आपटे '
इत्येतैः, आनन्दाश्रमस्थपण्डितानां साहाय्येन
संशोधितम् ।

एतत्पुस्तकं
' रावबहाद्दूर ' इत्युपपदधारिभिः
गंगाधर बापुराव काळे
जे. पी.
इत्येतैः
श्रीमन् ' महादेव चिमणाजी आपटे '
इत्यभिधेयमहाभागप्रतिष्ठापिते
आनन्दाश्रममुद्रणालये
आयसाक्षरैर्मुद्रयित्वा
प्रकाशितम् ।
शालिवाहनशकाब्दाः १८७४ ।
खिस्ताब्दाः ( दि. १६–८–१९५२ ) ।
द्वितीयेयमङ्कनावृत्तिः ।

मूल्यं चतुर्दशाऽऽणकाः ( ०१४ )

## श्रीशंकरः शरणम् ।

मुञ्जालकृतो लघुमानसाख्यः करणग्रन्थः ८५४ तमेऽब्दे लिखितः । तस्य काश्चित्प्रतिकृतयः महिशूर, त्रिवेंद्रम्, कोचीन, तिरुपति, विजगापट्टन्, वाराणसीत्यादि नगरेषु सन्तीति ज्ञायतेऽस्माभिः । कै० पं० सुधाकरद्विवेदिमहाभागैः स्वरचितगणकतरङ्गिण्यां(१८१४शाके)मुञ्जालस्य किंचिद् वृत्तमुल्लिखितम् । संप्रति तु सकलोऽपि ग्रन्थः पारमेश्वरटीकोपेतः प्रायः श० १३५३ तमेऽब्दे रचितः सोऽस्माभिः संपादितः मुद्रितश्च । तेन सकले ग्रन्थेऽस्मिन् यत् प्रतिपादितं तदवबोद्धुं सुशकम् ।

ग्रन्थस्यास्य विशेषः—

(अ) वर्तुलस्य चतुर्षु भागेषु कृतेषु ओजपदान्ते भुजकोटयोः समानता भवति ।

(ब) श० ८५४ तमेऽब्दे अयनांशाः ६ अंश ५० कला संमानिताः ।

(क) 'इन्दूच्चोनार्ककोटिघ्नाः' 'फले शशाङ्कतद्गत्योः' इति श्लोकद्वयस्य *कल्पना, वटेश्वरसिद्धान्तान्तर्गता इति पल्लव्यार्थः लघुमानसटीकायां कल्पवल्ल्यामुल्लिखति ।

कृतज्ञता—सुविदितभाण्डारकरप्राच्यमन्दिरस्थाः प्राचार्य गोडे महाशयाः, दक्षिण विश्वविद्यालयस्थाः प्राचार्य कर्वे महाभागाः, तिरुपतिस्थग्रन्थभाण्डागारव्यवस्थापकाः डॉ० ए० शंकरन् तथा च त्रिवेन्द्रस्थ पण्डित विद्याभूषण-महोपाध्याय बिरुदभाजो वेंकटशर्माणः, एभिर्महाभागैरस्मदर्थं यदात्मा आयासितस्तदर्थं तत्तेषामुपकृतिभराग्निनयावनतेन मूर्ध्ना वहामस्तराम् । इति शम् ।

| | |
|---|---|
| पुण्यपत्तनम्–आनन्दाश्रमः । मि. ज्ये. व. ६-१८६६ इन्दुवासरे । | आपटेकुलसंभूतो दत्तात्रेयात्मजो बलवन्तशर्मा । |

---

*विषयस्य स्पष्टीकरणार्थं श्रीपतिविरचित सिद्धान्तशेखरे ग्रहयुत्यध्याये श्लोक० १-४ तथा च भास्कराचार्यकृतबीजोपनये श्लो० ८ द्रष्टव्याः ।

# लघुमानसम् ।

ॐ तत्सद्ब्रह्मणे नमः ।

मुञ्जालाचार्यकृतं

# लघुमानसम् ।

पारमेश्वरव्याख्यासंवलितम् ।

## प्रथमोऽध्यायः ।

### मध्यमाधिकारः ।

प्रकाशादित्यवत्ख्यातो भारद्वाजो द्विजोत्तमः ।
लघ्वपूर्वस्फुटोपायं वक्ष्येऽन्यल्लघुमानसम् ॥ १ ॥

येन व्याप्तमिदं विश्वमरुणं तं किरीटिनम् ।
नत्वा मया मानसस्य व्याख्यानं क्रियते लघोः ॥

प्रकाशाख्ये पत्तन आदित्यवत्ख्यातो भारद्वाजगोत्रजो द्विजोत्तमोऽहं बृहन्मानसादन्यल्लघुमानसं वक्ष्य इति संबन्धः । पूर्वं स्फुटो न विद्यते यत्र सोऽपूर्वस्फुटः । लघुश्च सोऽपूर्वस्फुटश्च लघ्वपूर्वस्फुटः । लघ्वपूर्वस्फुट उपायो यस्मिन्शास्त्रे तल्लघ्वपूर्वस्फुटोपायम् ॥ १ ॥

चैत्रादौ वारसंक्रान्तितिथ्यर्केन्दूच्चसध्रुवान् ।
ज्ञात्वाऽन्यांश्चार्कवर्षादावाजन्म गणयेत्ततः ॥ २ ॥

इष्टवर्षे ध्रुवनिबन्धनं कृत्वाऽर्कादीनानयेदित्याह—चैत्रादाविति । इष्टवर्षे चैत्रशुक्लप्रतिपदि मध्याह्ने वारं संक्रान्तितिथिमर्कमध्यममिन्दुमध्यममिन्दूच्चं च सध्रुवान् शकाब्दांश्च ज्ञात्वाऽन्यान्कुजगुरुमन्दमध्यमान्बुधसितयोः शीघ्रोच्चे राहुं चार्कवर्षादावर्कस्य मध्यमगणान्ते ज्ञात्वा यावज्जीवं गणयेत् । सध्रुवान्सतो ध्रुवानिति योज्यम् । ध्रुवाः शकाब्दाः । कथमेषामवगमनमिति चेदुच्यते—आचार्येण निबद्धेभ्यो ध्रुवकेभ्यो वक्ष्यमाणविधिनैषामवगमनमिति तानि ध्रुवकमानान्यत्र दर्शयिष्यामः—

१ क. °ध्यं कु° । २ क. °च्चे च रा° । ३ क. °म इति । ४ क. °वकान्य° ।

" कृतशरवसुमितशाके चैत्रादौ सौरिवारमध्याह्ने ।
राश्यादिरजनृपार्को रविरिन्दुर्भवधृतिद्वियमाः " ॥

कृतशरवसुभिः ८५४ एभिर्मिते शकाब्दे चैत्रशुक्लप्रतिपदि मन्दवासरे मध्याह्ने राश्यादिरविः अजनृपार्काः ११ राशयः १६ भागाः १२ कलाः । इन्दुः भवधृतिद्वियमाः ११-१८-२२ ।

*सूर्यान्मन्दोच्चांशा वसुतुरगाः पर्वताश्च सत्र्यंशाः ।
स्वररवयः खाकृतयो द्विनवभुवोऽशीतिरद्रिजिनाः ॥

रवेर्मन्दोच्चांशा वसुतुरगाः ७८ । इन्दूच्चभागाः सत्र्यंशाः पर्वताः विंशतिलिप्तासहिताः सप्त भागाः [3] ७-२० । भौमस्य स्वररवयः १२७। बुधस्य खाकृतयः २२० । जीवस्य द्विनगभुवः १७२ । शुक्रस्याशीतिः ८० । मन्दस्याद्रिजिनाः २४७ ।

द्व्युत्कृतिखानि युगोत्कृतिकराब्धयः खाष्टनवदशत्रिसुराः ।
गोष्टाविंशतितानाः कुजादयः सूर्यभगणान्ते ।

कुजो राश्यादि द्व्युत्कृतिखानि [4] २-२६-० । बुधशीघ्रं युगोत्कृतिकराब्धयः [5] ४-२६ ४२ । गुरुमध्यं[6] खाष्टनव ०-८-९ । शुक्रस्य शीघ्रं दशत्रिसुराः [7] १०-३-३३ । मन्दमध्यं[8] गोष्टाविंशतितानाः [9] ९-२८-४९ । एवं सूर्यस्य मध्यभगणान्ते कुजादयः ।

संक्रान्तितिथिध्रुवकाः शक्रा वसुनवरसेषवो राहोः ।
कृतयमवसुरसदशका दशाहताः शेषपातांशाः ॥

चैत्रशुक्लप्रतिपदर्कमध्यभगणान्तरे यावत्यस्तिथयः संभवन्ति ताः संक्रान्तितिथय इत्युच्यन्ते । अत्र संक्रान्तितिथयः शक्राः १४ । राहो राश्यादयः वसुनवरसेषवः ८-९-५६ । अयं चक्राद् विशुद्ध एव । शेषाणां कुजादीनां पातांशाः कृतयमेत्यादिनोच्यन्ते । कुजस्य दशगुणितानि कृतानि ४० । बुधस्य दशगुणा यमाः २० । गुरोर्दशगुणा वसवः ८० । शुक्रस्य दशगुणा रसाः ६० । मन्दस्य दशगुणा दशकाः १०० । अस्मिन् कालेऽयनचलनांशाः प्रदर्श्यन्ते—

* पद्यमिदं क. पुस्तके नास्ति ।

१ क. °दिः र° । २ क. सूर्यान्म° । ३ क. २०७ । ४ क. २२ । ५ क. २४-६ ४-६ । ६ क. °ध्यमं खा° । ७ क. १०-३३-३ । ८ क. °ध्यमं मो° । ९ क. २२-४८-९ । १० क. गणान्तयोरणतः ।

अयनचलनाः षडंशाः पञ्चाशल्लिप्तिकास्तथैकैकम् ।
प्रत्यब्दं तत्सहितो रविरुत्तरविषुवदादिः स्यात् ॥

अयनचलनांशाः ६-५० पुनः प्रत्यब्दमेकैका लिप्तोस्तस्मिन् देयाः । एतदयनचलनं ग्रहस्य दक्षिणोत्तरस्फुटगत्यवगमने ग्रहस्फुटे देयम् । एतद्युतो रविरुत्तरविषुवदादिसंज्ञितो भवति । उदग्विषुवदाद्यर्क इत्यत्रायं ग्राह्य इत्यर्थः । अस्य ध्रुवस्य सौरिवारे निबद्धत्वात्तदुपरितनादर्कवारात् वारसिद्धिर्भवति । ध्रुवाब्दादीनां बाहुल्ये सति द्युगण एकद्वित्र्यादिक्षेपेणेष्टवारः साध्यः । अथाङ्कलाघवार्थमाचार्योदितैरेभिर्ध्रुवैरन्यानि ध्रुवाणि निबध्य लिख्यन्ते—

शशिसुरविधुमितशाके चैत्रादौ सूर्यवारमध्याह्ने ।
भानो राश्यङ्ककला रुद्रा नागेन्दवोऽब्धिवेदाश्च ॥
एकादश रसयमला विषधरबाणाः क्रमाच्छशाङ्कस्य ।
रुद्राः खमाग्नियमलाश्चन्द्रोच्चस्याथ सूर्यभगणान्ते ॥
भौमस्य पङ्क्तयोऽङ्कान्यहिरामाश्चाथ चन्द्रपुत्रस्य ।
रुद्राः फणियमलाः खं जीवस्य द्वौ कृताश्विनौ देवाः ॥
दस्रौ नृपास्त्रिबाणा भृगुपुत्रस्याथ सूर्यतनयस्य ।
अभ्रं शराः क(?)बाणा राहोः खं बाणभूमयोऽङ्कशराः ॥ इति ।

अत्र संक्रान्तितिथय एकादशरविमध्येनैव तत् सिध्यति । अस्य ध्रुवनिबन्धनस्य सूर्यवारत्वात्तदुपरितनचन्द्रवाराद् वारसिद्धिः स्यात् । एवमिष्टवर्षे ध्रुवाणि निबध्य तैरर्कादीन् गणयेत् ॥ २ ॥

**ध्रुवादब्दगणो दिग्घ्नः स्वकीयाष्टांशसंयुतः ।**
**संक्रान्तितिथियुक्तोऽधः स्वषष्ट्यंशविवर्जितः ॥ ३ ॥**
**त्रिंशच्छिन्नावशेषोनश्चैत्रादितिथिभिर्युतः ।**
**त्रिगुणाब्दगतर्तूनो द्युगणो ध्रुववासरात् ॥ ४ ॥**

अथ द्युगणानयनमाह—ध्रुवादिति । यस्मिन् वर्षे ध्रुवनिबन्धनं कृतं तस्माद् वर्षादतीतानब्दान् विन्यस्य तान् दशभिर्निहत्य पुनः पृथगधो विन्यस्याधःस्थितानष्टभिर्विभज्य पूर्णान्येव फलानि गृहीत्वा तान्युपरिस्थितराशौ प्रक्षिपेत् । पुनस्तस्मिन् राशौ ध्रुवपठिताः संक्रान्तितिथीः प्रक्षिप्य पुनः पृथगधो विन्यस्य

१ क. °ता अस्मि° । २ क. °रग° । ३ क. °इयंशक° । ४ क. °स्रो नृ° । ५ क. °मध्यमेनैव हि त° । ६ क. °रगतल्दा° । ७ क. °रादिवा° ।

पुनरपि तस्याधो विन्यस्य तेषां त्रयाणां राशीनामधःस्थितं षष्ट्या विभज्य पूर्णान्येव फलानि गृहीत्वा तानि मध्यस्थराशेः संशोध्य तं मध्यस्थराशिं त्रिंशता विभज्य लब्धानि पूर्णान्येव फलानि गृहीत्वा कुत्रचिद् विन्यस्य हृतशेषमुपरिस्थराशेः संशोध्य तस्मिन् राशौ वर्तमानाब्दे चैत्रप्रतिपदाद्याः सकलास्तिथीः प्रक्षिप्य पुनस्तस्माद्राशेस्त्रिगुणान् ध्रुवाब्दान् वर्तमानाब्दे गतानृतूंश्च संशोधयेत्। स राशिर्द्युगणो नाम भवति। तस्मिन् सप्तभिर्हृते शिष्टाद् ध्रुववासरादिवारो भवति। द्युगणं एवं प्रक्षिप्य वा संशोध्य वेष्टवारः साध्यः। यदा पुनरब्दादौ त्रिगुणाब्दान शोध्यास्तदा त्रिगुणाब्देभ्यस्त्रिंशच्छिन्नावशेषोनं चैत्रादितिथियुतराशिं विशोधयेत्। तत्र शिष्टमृणद्युगणसंज्ञं भवति। तस्मात्सप्तभ्यो विशोध्य शिष्टादपि वारः साध्यः। एकद्विसंख्ये ध्रुवाब्दे चैवमेव संभवति ॥ ३ ॥ ४ ॥

द्युगणोऽधो दशघ्नोऽब्दयुतः खागाप्तवर्जितः।
अष्टघ्नाब्दोनितोऽर्कांशाः प्रक्षेप्योऽब्दाष्टमः कलाः ॥ ५ ॥

इदानीमादित्यस्य मध्यमानयनमाह—द्युगण इति। इष्टदिने द्युगणं विन्यस्य पुनः पृथगधो विन्यस्याधःस्थिते दशघ्नान् ध्रुवाब्दान् प्रक्षिप्य पुनस्तं खागैः सप्तत्या विभज्य लब्धानंशानुपरिस्थितराशेर्विशोध्य हृतशेषं षष्ट्या निहत्य खागैरेव विभज्य लब्धा लिप्ताश्चोपरिस्थभागेष्वेकं लिप्तीकृत्य ततो विशोधयेत्। पुनरष्टघ्नान् ध्रुवाब्दानुपरिस्थराशेर्विशोध्य ध्रुवाब्दानामष्टमांशेन तुलिताः कला लिप्तासु प्रक्षिपेत्। तत्र दृष्टा अंशा भवन्ति। रवेरुपरिस्थिता अंशा अधःस्थिता लिप्ता इत्यर्थः। पुनः पुनरुपरिस्थितानंशान् त्रिंशता समारोप्य ध्रुवं प्रक्षिपेत्। सोऽर्कस्य मध्यमो भवति। अष्टघ्नाब्दानामशोध्यत्वे त्वष्टघ्नाब्देभ्योऽर्कांशान् सलिप्तान् विशोध्य शिष्टं ध्रुवाच्छोधयेत्। तत्र शिष्टेऽब्दाष्टमः कलाः प्रक्षिपेत् स रविर्मध्यमो भवति। ऋणद्युगणे तु दशघ्नाब्दाद् ऋणद्युगणं विशोध्य शिष्टात् खागाप्तऋणद्युगणे प्रक्षिप्याष्टघ्नाब्दानपि तस्मिन्नेव प्रक्षिप्य पुनस्तद्ध्रुवान् संशोध्य शिष्टेऽब्दाष्टमकलाः प्रक्षिपेत्। स रविर्भवति ॥ ५ ॥

---

१ क. °दायतीतास्ति°। २ क. °ण एकं प्र°। ३ क. °ति। ऋणद्युगणं स°। ४ क °शिष्टान् पूर्ववद् वारश्च भवति। एकद्वित्रिसं°। ५ क. °शघ्नाब्द°। ६ क. °कांशोः। ७ क. °ला। ८ क. °स्थभागेभ्यो वि°। ९ क. °न्ति। उप°। १० क. पुनरुप°। ११ क. °मः क°। १२ क. °वान् सं°।

विश्वघ्नो द्युगणो द्विष्ठस्त्रिघ्नाब्दद्युगणोनितः ।
अष्टाङ्गाप्तजिनघ्नोऽप्तयुतो भागादिंतः शशी ॥ ६ ॥

चन्द्रमध्यमानयनमाह—विश्वघ्न इति । द्युगणं विन्यस्य विश्वैस्त्रयोदशभिर्निहत्य तं पुनः पृथगधो विन्यस्याधःस्थिते त्रिघ्नान् ध्रुवाब्दान् केवलं द्युगणं च विशोध्य शिष्टमष्टाङ्गैरष्टषष्ट्या विभज्य लब्धान् भागान् गृहीत्वा शिष्टात् षष्टिघ्नात्तैरेव विभज्य लब्धा लिप्ताश्च गृहीत्वा तान् भागान् सलिप्तानुपरिस्थिते विश्वघ्नद्युगणे प्रक्षिप्य पुनर्जिनैश्चतुर्विंशत्या निहत्य ध्रुवाब्दान् तस्मिन्नेव प्रक्षिपेत् । स भागात्मकः शशी भवति । पुनः पूर्ववद् भागांस्त्रिंशता समारोप्य ध्रुवं प्रक्षिपेत् । ऋणद्युगणे तु विश्वघ्नाद् द्युगणाद् द्युगणं विशोध्य पुनस्तस्मिन् त्रिघ्नाब्दान् प्रक्षिप्याष्टाङ्गैर्विभज्य लब्धं सावयवं विश्वघ्ने द्युगणे प्रक्षिप्य पुनस्तान् भागात्मिकान् ध्रुवाद् विशोध्य शिष्टे जिनघ्नाब्दान् प्रक्षिपेत् । स चन्द्रो भवति ॥ ६ ॥

द्युगणाद्द्विगुणाब्दोनाच्चन्द्रोच्चांशो नवोद्धृतः ।
खवेदघ्नाब्दसंयुक्ताः साष्टांशाब्दकलोनिताः ॥ ७ ॥

द्युगणाद्द्विगुणितैर्ध्रुवाब्दान् विशोध्य शिष्टं नवभिर्विभज्य लब्धा अंशा भवन्ति । शिष्टात्षष्टिघ्नान्नवभिर्लब्धाः कला भवन्ति । तेष्वंशेषु खवेदैश्चत्वारिंशता गुणितान् ध्रुवाब्दान् प्रक्षिप्य तस्मात्पुनरब्दाष्टमांशकला अब्दसमानकलाश्च विशोधयेत् । तत्र जाताश्चन्द्रोच्चभागा भवन्ति । पुनस्तान् भागांस्त्रिंशता समारोप्य ध्रुवं प्रक्षिपेत् । स चन्द्रतुङ्गो भवति । द्युगणाद्द्विगुणिताब्दस्याधिकत्वे तु द्विगुणाब्दाद्द्युगणं विशोध्य शिष्टान्नवभिराप्तानंशान्सलिप्तान्ध्रुवाद्विशोध्य खवेदघ्नाब्दान्प्रक्षिपेत् । ततः साष्टांशाब्दकला विशोधयेत् । स तुङ्गः । ऋणद्युगणे तु द्विगणाब्दयुताद्द्युगणान्नवोद्धृतानंशान्सालिप्ताद्ध्रुवाद्विशोध्य तस्मिन् खवेदघ्नाब्दान् प्रक्षिप्य साष्टांशाब्दकला विशोधयेत् । स तुङ्गः । यदा पुनरब्दाभावस्तदाऽब्दोक्तकार्यं विना रविशशितुङ्गानानयेत् ॥ ७ ॥

---

१ क. °द्विग° । २ क. °घ्नाब्दयु° । ३ क. °दिकः श° । ४ क. °स्थिता त्रि° । ५ क. °ष्टान् षष्टिघ्नादष्टाङ्गैराप्ता लि° । ६ क. °गात्मकाद् ध्रु° । ७ क. °नश्चन्द्रो° । ८ क. °च्चांशान° । ९ क. °ताः । १० क. °ताद् ध्रु° । ११ क. °प्ताद् ध्रु° । १२ क. °स चन्द्रोच्चः स्यात् । ऋ° । १३ क. °खवेदाब्दौ प्र° । १४ क. °स चन्द्रोच्चो भवति । य° । १५ क. °ङ्गानुक्तन्यायेनाऽऽ° ।

ध्रुवाद्यर्कात्कुजो द्वाभ्यां नृपघ्नाच्चेषुखेषुभिः ।
सप्तघ्नादृतुवेदैर्ज्ञश्चतुर्घ्नेरविणा युतः ॥ ८ ॥

अथार्कमध्यमेन कुजादीनां मध्यमानयनमाह—ध्रुवाद्यर्कादिति । इष्टदिनमध्याह्ने लिप्ताभागराशिसहितमर्कं विन्यस्य राशिस्थानादुपरि ध्रुवाब्दांश्च विन्यसेत् । स ध्रुवाद्यर्क इत्युच्यते । किंतु चैत्रशुक्लप्रतिपदर्कवर्षान्तरयोरन्तराले ध्रुवाब्दा एकहीना भवन्ति । अर्कवर्षादौ कुजादीनां ध्रुवनिबन्धनकरणात् । एवंविधं ध्रुवाद्यर्कं विन्यस्याब्दान्द्वाभ्यां विभज्य लब्धानब्दानेकत्र विन्यसेत् । पुनर्हृतशिष्टमब्दं द्वादशभिर्निहत्याधःस्थितेषु राशिषु प्रक्षिप्य तान्राशीन्द्वाभ्यां विभज्य लब्धान्राशीन्पूर्वं विन्यस्तस्याब्दस्याधो विन्यसेत् । पुनस्तद्राशिशेषं त्रिंशता निहत्य भागेषु प्रक्षिप्य तान्भागान्द्वाभ्यां विभज्य लब्धानंशान्पूर्वानीतराशेरधो विन्यस्य पुनस्तद्भागशेषं षष्ट्या निहत्य लिप्तासु प्रक्षिप्य पुनस्ता लिप्ता द्वाभ्यां विभज्य लब्धा लिप्ताः पूर्वानीतभागस्याधो विन्यसेत् । पुनरपि ध्रुवाद्यर्कं विन्यस्य लिप्ताभागराश्यब्दान् पृथक्पृथङ् नृपैः षोडशभिर्निहत्य लिप्ताः षष्ट्या समारोप्यांशेषु प्रक्षिप्यांशांस्त्रिंशता समारोप्य राशिषु प्रक्षिप्य राशीन् द्वादशभिः समारोप्याब्देषु प्रक्षिपेत् । पुनस्तानब्दानिषुखेषुभिः पञ्चोत्तरपञ्चशतैर्विभज्य लब्धानब्दान्पूर्वानीतेष्वब्देषु प्रक्षिपेत् । पुनस्तच्छेषं द्वादशभिर्निहत्याधःस्थितराशिषु प्रक्षिप्य तान्राशीनिषुखेषुभिर्विभज्य लब्धान्राशीन्पूर्वानीतराशिषु प्रक्षिप्य पुनस्तच्छेषं त्रिंशता निहत्य भागेषु प्रक्षिप्य तान्भागानिषुखेषुभिर्विभज्य लब्धान्भागान्पूर्वानीतभागेषु प्रक्षिप्य पुनस्तच्छेषं षष्ट्या निहत्य लिप्तासु प्रक्षिप्य ता लिप्ता इषुखेषुभिर्विभज्य लब्धा लिप्ताः पूर्वानीतलिप्तासु प्रक्षिपेत् । एवं बुधादीनामपि गुणहरणसमारोपणादयो द्रष्टव्याः । पुनस्तान्लिप्तादीन्षष्ट्यादिना पूर्ववत्समारोप्य तस्मिन् ध्रुवं प्रक्षिपेत् । स इष्टदिनमध्याह्ने कुजमध्यमो भवति ।

सप्तघ्नादिति । ध्रुवाद्यर्कं विन्यस्य तस्य लिप्तांशान्राश्यब्दान् पृथक्पृथक् सप्तभिर्निहत्य पूर्ववत्समारोप्य पुनस्तानब्दादीनृतुवेदैः षट्चत्वारिंशता पूर्ववद्विभज्य लब्धानब्दराशिभागलिप्तिकाख्यान्क्रमेणैकत्र विन्यस्य तस्मिंश्चतुर्गुणितं ध्रुवाद्यर्कं प्रक्षिप्य ध्रुवं च प्रक्षिपेत् । स ज्ञो बुधः । बुधस्य शीघ्रोच्चमित्यर्थः ॥ ८ ॥

---

१ क. °र्कमध्यमं वि° ।

रूपघ्नाद्भास्करैर्जीवो भूघ्नाच्च रदखेन्दुभिः ।
दिग्घ्नात् षड्भिः सितो दिग्घ्नात् त्रिजिनांशेन वर्जितः ॥ ९ ॥

रूपघ्नादिति । ध्रुवाद्यर्कं रूपेणैकेन निहत्य भास्करैर्द्वादशभिर्विभज्य लब्धानब्दादीनेकत्र विन्यस्य पुनरपि ध्रुवाद्यर्कं भुवा—एकेन निहत्य रदखेन्दुभिर्द्वात्रिंशदुत्तरसहस्रेण( १०३२ )विभज्य लब्धानब्दादीन् पूर्वानीतेष्वब्दादिषु प्रक्षिप्य ध्रुवं प्रक्षिपेत् । स गुरुमध्यमो भवति । अत्र रूपगुणनं भूगुणनं च पादपूरणार्थमेव । भेदाभावात् ।

दिग्घ्नादिति । ध्रुवाद्यर्कं विन्यस्य तं दशभिर्निहत्य षड्भिर्विभज्य लब्धानब्दादीनेकत्र विन्यस्य पुनरपि ध्रुवाद्यर्कं दशभिर्निहत्य त्रिजिनैस्त्रिचत्वारिंशदुत्तरशतद्वयेन ( २४३ ) विभज्य लब्धानब्दादीन् पूर्वानीतेभ्योऽब्दादिभ्यो विशोध्य ध्रुवं प्रक्षिपेत् । स सितः शुक्रस्य शीघ्रोच्चमित्यर्थः ॥ ९ ॥

षड्गुणादयुतेनाऽऽर्किश्चन्द्रघ्नाच्च खवह्निभिः ।
नखैः पञ्चाङ्गनेत्रैश्च चन्द्रपातो विलोमगः ॥ १० ॥

षड्गुणादिति । ध्रुवाद्यर्कं षड्भिर्निहत्यायुतेन (१००००) विभज्य लब्धानब्दादीनेकत्र विन्यस्य पुनरपि ध्रुवाद्यर्कं चन्द्रेणैकेन विभज्य खवह्निभिस्त्रिंशता विभज्य लब्धानब्दादीन् पूर्वानीताब्देषु प्रक्षिप्य ध्रुवं प्रक्षिपेत् । स आर्किर्मन्दमध्यमो भवति ।

नखैरिति । ध्रुवाद्यर्कं नखैर्विंशत्या विभज्य लब्धानब्दादीनेकत्र विन्यस्य पुनरपि ध्रुवाद्यर्कं पञ्चाङ्गनेत्रैः पञ्चषष्ट्युत्तरशतद्वयेन ( २६५ ) विभज्य लब्धानब्दादीन् पूर्वानीताब्दादिषु प्रक्षिप्य पुनस्तान् राश्यादीन् ध्रुवाच्छोधयेत् । स चन्द्रपातो राहुरित्यर्थः । विलोमगत्या ध्रुवाच्छोधनं क्रियते । सर्वेषामप्यब्दाः प्रयोजनाभावान्न संरक्ष्यन्ते । राश्यादय एव संरक्षणीयाः ॥

इति पारमेश्वरे मानसगणितव्याख्याने
मध्यमविधिः ॥

---

१ क. निहत्य । २ क. °ताब्दादिषु° । ३ क. °गत्वाद् भ्रु ।

## अथ स्फुटगत्यधिकारः ।

ग्रहः स्वोच्चोनितः केन्द्रं तदूर्ध्वाधोऽर्धजो भुजः ।
धनर्णं पदशः कोटी धनर्णर्णधनात्मिका ॥ १ ॥

अथ स्फुटकरणमाह—ग्रह इति । ग्रहमध्यमात्स्वमन्दोच्चं विशोध्य शिष्टं केन्द्रसंज्ञं भवति । तथा मन्दभुजाफलसंस्कृताद् ग्रहमध्यमात्स्वशीघ्रोच्चं विशोध्य शिष्टमपि केन्द्रसंज्ञं भवति । तदूर्ध्वाधोऽर्धजो भुजो धनर्णम् । तस्मिन्केन्द्र ऊर्ध्वार्धजो भुजो धनात्मको भवति । अधोऽर्धजो भुज ऋणात्मको भवति । केन्द्रे तुलादिषड्राशिगते धनात्मको भुजः । मेषादिषड्राशिगत ऋणात्मक इत्यर्थः । पदशः कोटी धनर्णर्णधनात्मिका कोटी पदक्रमाद् धनर्णर्णधनात्मिका भवति । केन्द्रे प्रथमपदगता कोटी धनात्मिका द्वितीयपदगता ऋणात्मिका, तृतीयपदगता च ऋणात्मिका चतुर्थपदगता धनात्मिका इत्यर्थः । एवं सर्वत्र भुजाकोट्योर्धनर्णत्वकल्पना वेदितव्या ॥ १ ॥

ओजे पदे गतैष्याभ्यां बाहुकोटी समेऽन्यथा ।
चतुस्त्र्येकघ्नराश्यैक्यं बाहुकोट्योः कलांशकाः ॥ २ ॥

अथ तयोर्भुजाकोट्योर्विभागं जीवाकल्पनां चाऽऽह[1]—ओज इति । ओजे पदे गते राश्यादिकं बाहुर्भवति । तस्मिन्नेव पद एष्यं राश्यादिकं कोटिर्भवति । समेऽन्यथा[2] समपदे गतं कोटिर्भवति । एष्यं भुजा भवतीति । एवं भुजाकोटिविभागः सर्वत्र द्रष्टव्यः ।

चतुरिति । भुजाकोट्योरुक्तविधिना राश्यादिकमानीय पृथग्विन्यसेत् । पुनर्भुजायाः प्रथमराशिं चतुर्भिर्निहत्य द्वितीयराशिं त्रिभिर्निहत्य तृतीयराशिमेकेन निहत्य तेषामैक्यं कुर्यात् । यदा पुनर्भुजाया द्वौ राशी कतिचिद् भागा लिप्ताश्च संभवन्ति तदा प्रथमराशिं चतुर्भिर्निहत्य द्वितीयं त्रिभिश्च निहत्य भागा[3] लिप्ताश्च द्वाभ्यां निहत्य लिप्ता षष्ट्या समारोप्य भागस्थाने प्रक्षिप्य भागस्थानपि षष्ट्यैव समारोप्य राशिस्थाने प्रक्षिपेत् । यदा पुनरेको राशिः कतिचिद्भागा लिप्ताश्च संभवन्ति तदा प्रथमराशिं चतुर्भिर्निहत्य भागा[4] लिप्ताश्च षड्भिर्निहत्य लिप्ताः षष्ट्या समारोप्य भागस्थाने प्रक्षिप्य भागस्थानपि षष्ट्यैव समारोप्य राशिस्थाने

१ क. °आनयनं चाऽऽ° । २ क. तथा । ३ क. °गाश्चि° । ४ क. °माश्चि° ।

प्रक्षिपेत्। यदा पुनरेकोऽपि राशिर्नास्ति कतिचिद्भागा लिप्ताश्च संभवन्ति तदा भागान्सलिप्तानष्टभिर्निहत्य लिप्ताः षष्ट्या समारोप्य भागस्थाने प्रक्षिप्य भागानपि षष्ट्यैव समारोप्य राशौ प्रक्षिपेत्। तत्र राशिस्थानगता भागा भवन्ति। भागस्थानगता लिप्ता भवन्ति। लिप्तास्थानगता विलिप्ता भवन्ति। एवं चतुरूपेकघ्नराश्यैक्ये कृते यावन्तो भागा विद्यन्ते तावतीर्लिप्ता लिप्तासु प्रक्षिपेत यावत्यः पुनर्लिप्ताः प्राक्संभवन्ति तावतीर्विलिप्ता विलिप्तासु प्रक्षिपेत्। एवं कृते भागाद्या भुजाया जीवा भवन्ति। कोट्या अप्येवमेव। चतुरूपेकघ्नराश्यैक्यं कृत्वा भागासमानलिप्ता लिप्तासमानविलिप्ताश्च प्रक्षिपेत्। ताः कोटिज्या भवन्ति कलात्मका इत्यस्यायमर्थः—चतुरूपेकघ्ना लिप्तीकृता राशयो यावन्तस्तावन्तो भागास्तावत्यो लिप्ताश्च जीवारूपेण ग्राह्या इत्यर्थः। अवयवरूपा भागाद्या द्विघ्नेन गुणकारेण सदा गुणितव्याः। राशिस्थानगतानां भागात्मकत्वात्। एवं भुजाकोट्योर्जीवां पृथगानीयैकत्र संरक्षेत् ॥ २ ॥

सूर्याज्जिनाश्विनोऽगाङ्काः शरवेदाः खखेन्दवः।
दृग्र्यङ्काः खदन्तास्त्रिरसाश्छेदाः कोट्यर्धसंस्कृताः ॥ ३ ॥

अथ मन्दफलानयनाय हारकांस्तेषां स्फुटीकरणं चाऽऽह—सूर्यादिति। सूर्यस्य जिनाश्विनः ( २२४ ) छेदाः हारका इत्यर्थः। चन्द्रस्य अगाङ्काः ( ९७ )। कुजस्य शरवेदाः ( ४५ )। बुधस्य खखेन्दवः ( १०० ) गुरोर्दृग्र्यङ्काः (९२)। शुक्रस्य खदन्ताः ( ३२० )। शनेस्त्रिरसाः ( ६३ )। एते कोट्यर्धसंस्कृताः स्फुटा भवन्ति। एतदुक्तं भवति—अर्कादिमन्दान्तानां ग्रहाणां मध्यमं विन्यस्य स्वमन्दोच्चं विशोध्य शिष्टाद् भुजज्यां कोटिज्यां च पूर्वोक्तविधिनाऽऽनीयैकत्र विन्यस्य कोटिज्यां पुनः पृथग् विन्यास्यार्धीकृत्य स्वीये छेदे जिनाश्विन इत्यादिपठिते संस्कुर्यात्। कोट्या धनत्वे धनं ऋणत्वे ऋणं कुर्यात्। स स्फुटच्छेदो भवति। पुनर्भागात्मिकां भुजज्यां विन्यस्य लिप्तीकृत्य स्फुटच्छेदेन विभज्य लब्धान् भागान गृहीत्वा शिष्टात् षष्टिघ्नात् स्फुटच्छेदेन विभज्य लब्धा लिप्ताश्च गृहीत्वा तान् भागान् सलिप्तान् ग्रहमध्यमे संस्कुर्यात्। भुजाया ऋणत्वे ऋणं धनत्वे धनं कुर्यात्। स मन्दस्फुटो ग्रहो भवति ॥ ३ ॥

---

१ क. °न्यङ्काः। २ क. °ष्टान् ष°। ३ क. °घ्नान् स्फु°। ४ क. °देनैव वि°।

भुजो लिप्तीकृतश्छेदभक्तो ग्रहफलांशकाः ।
कोटिर्गतिघ्ना च्छेदाप्तं व्यस्तं गतिकलाः फलम् ॥ ४ ॥

तदुक्तं—" भुजो लिप्तीकृतश्छेदभक्तो ग्रहफलांशकाः " इति । अर्केन्दू मन्दस्फुटेनैव स्फुटौ भवतः । कुजादीनामप्येवम् । मन्दस्फुटं कृत्वा तन्मन्दस्फुटं स्फुटच्छेदं चैकत्र संरक्षेत् ।

अथ मन्दस्फुटगत्यानयनमाह—कोटिरिति । पूर्वानीतां कोटिज्यां स्वमध्यगत्या निहत्य स्फुटच्छेदेन विभज्य लब्धा लिप्ताः स्वमध्यगतौ ऋणधनव्यत्ययेन संस्कुर्यात् । कोटया ऋणत्वे धनं कुर्यात् । कोटया धनत्वे ऋणं कुर्यात् । सा मन्दस्फुटगतिर्भवति । अर्केन्द्वोः सैव स्फुटा गतिर्भवति । मध्यगत्यवगमनं तु द्विनद्वये ग्रहस्य मध्यममानीय तयोरन्तरं कुर्यात् । तदन्तरं मध्यगतिर्भवति ॥ ४ ॥

कुजजीवशनिच्छेदा युगाग्न्यगहता हृताः ।
तिथिशैलर्तुभिर्व्यासा मूर्छनेशा ज्ञशुक्रयोः ॥ ५ ॥

अथ कुजादीनां शीघ्रफलानयनार्थं तद्व्यासार्धानयनमाह—कुजेति । कुजजीवशनीनां मन्दस्फुटच्छेदान् पूर्वानीतान्युगादिभिर्निहत्य तिथ्यादिभिर्विभज्य लब्धा व्यासा भवन्ति । तत्र कुजस्य मन्दस्फुटच्छेदं युगैश्चतुर्भिर्निहत्य तिथिभिः पञ्चदशभिर्विभज्य लब्धान् भागान् गृहीत्वा शिष्टात्षष्टिघ्नात् पञ्चदशभिर्विभज्य लब्धा लिप्ताश्च गृह्णीयात् । ते कुजस्य व्यासा भवन्ति । जीवस्य तु स्वमन्दस्फुटच्छेदमग्निभिस्त्रिभिर्निहत्य शैलैः सप्तभिर्विभज्य लब्धं सावयवं जीवस्य व्यासो भवति । मन्दस्य च स्वमन्दस्फुटच्छेदमगैः सप्तभिर्निहत्य ऋतुभिः षड्भिर्विभज्य लब्धं सावयवं मन्दस्य व्यासो भवति । एते मध्यव्यासा न स्फुटाः । मूर्छनेशा ज्ञशुक्रयोः । ज्ञस्य बुधस्य मूर्छना एकविंशतिर्मध्यव्यासः । शुक्रस्य ईशा एकादश मध्यव्यासः । अनयोः सदाऽप्येवमेव मध्यव्यासः । न मन्दस्फुटच्छेदाद् भेदः संभवति ॥ ५ ॥

ते दोस्त्र्यंशयुताः शीघ्रच्छेदाः स्युः कोटिसंस्कृताः ।
ताराग्रहार्कयोः शीघ्रः शीघ्रोच्चमितरो ग्रहः ॥ ६ ॥

एषां व्यासानां स्फुटकरणं तैः शीघ्रच्छेदानयनं चाऽऽह—ते दोस्त्र्यंशयुता इति । ते व्यासाः शीघ्रभुजज्यात्र्यंशयुताः स्फुटा भवन्ति । ते स्फुटव्यासाः शीघ्रको-

१ क. °व्यासो मू° । २ क. °य व्यासान° । ३ क. °ज्य लिप्ता विलि° । ४ क. °न्दच्छे°

टिज्यया सकलया संस्कृताः स्फुटाः शीघ्रच्छेदा भवन्ति । एतदुक्तं भवति—कुजादीनां पञ्चानां मन्दस्फुटं पृथग्विन्यस्य तस्मात्स्वशीघ्रोच्चं विशोध्य भुजज्यां कोटिज्यां च पूर्ववदानीयैकत्र विन्यस्य पुनर्भुजज्यां पृथग्विन्यस्य त्रिभिर्विभज्य लब्धं पूर्वानीते मध्यव्यासे तदा प्रक्षिपेत्स स्फुटव्यासो भवति । पुनस्तं स्फुटव्यासं पृथग्विन्यस्य तस्मिञ्शीघ्रकोटिज्यां सकलां संस्कुर्यात् । कोट्या ऋणत्वे ऋणं धनत्वे धनम् । स स्फुटः शीघ्रच्छेदो भवति । पुनः शीघ्रभुजज्यां लिप्तीकृत्य शीघ्रच्छेदेन विभज्य लब्धान्भागान्गृहीत्वा शिष्टात्षष्टिघ्नात्तेनैव च्छेदेन विभज्य लब्धा लिप्ताश्च गृहीत्वा छेदं संरक्ष्य ताञ्शीघ्रभागानेकत्र विन्यस्य पुनस्तान्पृथग्विन्यस्य मन्दस्फुटग्रहे ऋणं धनं वा कुर्यात् । भुजाया ऋणत्वे ऋणं धनत्वे धनम् । स स्फुटग्रहो भवति । कुजबुधगुरुसितमन्दानामेवं स्फुटकरणं कुर्यादिति ।

अथ कुजादीनां शीघ्रोच्चकल्पनमाह—तारेति । ताराग्रहाः कुजादयः पञ्च ग्रहाः । तेष्विष्टग्रहमध्यमां अर्कमध्यमयोर्या शीघ्रगतिः सा तस्य शीघ्रोच्चमितरो मध्यमः । अतः कुजगुरुमन्दानामर्कमध्यमः शीघ्रोच्चः स्वमध्यमो मध्यमः । बुधशुक्रयोः स्वमध्यमः शीघ्रोच्चः । अर्कमध्यम स्वमध्यम इति सिद्धं भवति । बुधशुक्रयोरर्कमध्यमं स्वमध्यमं परिकल्प्य मन्दस्फुटं शीघ्रस्फुटं च कुर्यात् ॥६॥

व्यासं शीघ्रफलार्कांशभागोनं ग्रहशीघ्रयोः ।
गत्यन्तरघ्नं छेदाप्तं त्यक्त्वा शीघ्रगतेर्गतिः ॥ ७ ॥

इदानीं कुजादीनां स्फुटगत्यानयनमाह—व्यासमिति । ग्रहस्य शीघ्रभुजाफलं द्वादशभिरंशैर्विभज्य लब्धं स्फुटव्यासाद्विशोध्य शिष्टं स्वमन्दस्फुटभुक्तिशीघ्रोच्चभुक्त्योरन्तरेण निहत्य शीघ्रच्छेदेन विभज्य लब्धं शीघ्रोच्चभुक्तेर्विशोधयेत् । शिष्टं ग्रहस्य स्फुटभुक्तिर्भवति । यदा यत्फलमशोध्यं स्यात्तदा तत्फलाच्छीघ्रभुक्तिं विशोध्य शिष्टं ग्रहस्य वक्रभुक्तिर्भवति ॥ ७ ॥

इति पारमेश्वरे मानसगणितव्याख्याने स्फुटगत्यधिकारः ॥

---

## अथ प्रकीर्णकाधिकारः ।

इन्दूच्चोनार्ककोटिघ्ना गत्यंशा विभवा विधोः ।
गुणो व्यर्केन्दुदोःकोट्योरल्पपञ्चाप्तयोः क्रमात् ॥ १ ॥

---

१ क. °गान्सलिप्ताने° । २ क. °मार्क° । ३ क. °च्चं स्व° । ४ क. °च्चं । ५ क. °दा तव° ।

अथ ग्रहणादीनां दृग्गणितसमीकरणार्थं चन्द्रस्य तद्भुक्तेश्च द्वितीयं कर्माऽऽह— इन्दूच्चेति । इन्दूच्चोनार्कस्य कोटिज्यया गुणिता विधोर्विभवा गत्यंशा गुणकारो भवति । व्यर्केन्द्वोर्भुजाकोटिज्ययोर्गुणकार इत्यर्थः । एतदुक्तं भवति—स्फुटार्कादिन्दूच्चं विशोध्य धनात्मिकामृणात्मिकां वा कोटिज्यामानीय तया भागात्मिकयेन्दोः स्फुटगत्यंशानेकादशत्रिंशैर्हीनोत्सलिप्तान्गुणयेत् । तथा गुणितास्त इन्दूच्चहीनार्ककोटिवशाद्धनात्मक ऋणात्मको वा गुणकारो भवतीति । कस्यायं गुणकार इत्यत्राऽऽह—व्यर्केन्दुदोःकोटयोरुपपञ्चाप्तयोरिति । चन्द्रस्फुटात्स्फुटार्कं विशोध्य धनात्मिकामृणात्मिकां वा भुजज्यां तथाभूतां कोटिज्यां चाऽऽनीय गुणकारेण पृथग्गुणित्वा भुजज्यामेकेन कोटिज्यां पञ्चभिर्विभज्य लब्धद्वयं लिप्तादिकं गृहीत्वा चन्द्रे तद्भुक्तौ च संस्कुर्यात् । तत्कथमित्यत्राऽऽह—

फले शशाङ्कतद्गत्योर्लिप्ताद्ये स्वर्णयोर्वधे ।
ऋणं चन्द्रे धनं भुक्तौ स्वर्णसाम्यवधेऽन्यथा ॥ २ ॥

एतदुक्तं भवति——व्यर्केन्दुभुजज्यागुणकारयोरेकस्य धनत्वेऽन्यस्य ऋणत्वे सति व्यर्केन्दुभुजज्यात एकेनाऽऽप्तं लिप्तादिकं फलं चन्द्रस्फुटाच्छोधयेत् । गुणकारभुजज्ययोरुभयोर्युगपद् धनत्वे वा ऋणत्वे वा सति तत्फलं चन्द्रस्फुटे प्रक्षिपेत् । स स्फुटचन्द्रो भवति । भुक्तिस्तु व्यर्केन्दुकोटिज्यागुणकारयोरेकस्य धनत्वेऽन्यस्य ऋणत्वे सति व्यर्केन्दुकोटिज्यातः पञ्चभिराप्तं लिप्तादिकं फलं चन्द्रस्फुटभुक्तौ प्रक्षिपेत् । कोटिज्यागुणकारयोर्युगपद्धनत्वे वा ऋणत्वे वा सति तत्फलं चन्द्रस्फुटभुक्तेर्विशोधयेत् । सा स्फुटभुक्तिर्भवतीति ॥ २ ॥

अवन्तिसमयाम्योदग्रेखा पूर्वापराध्वना ।
ग्रहगत्यंशषष्ट्यंशो हतो लिप्तास्वृणं धनम् ॥ ३ ॥

अथ देशान्तरं कर्माऽऽह—अवन्तीति । अवन्तिरिति मध्यरेखागतं किमपि पत्तनम् । तत्समदक्षिणोत्तरा लङ्कांपूर्वावगाहिनी या रेखा, तद्रेखातः पूर्वतोऽपरतो वा यावद् योजनान्तरे दृष्टाववतिष्ठते तानि योजनानि देशान्तरयोजनानीति प्रसिद्धानि । तैर्ग्रहस्य गत्यंशषष्ट्यंशं देशान्तरयोजनैर्निहत्य षष्ट्या विभज्य लब्धं लिप्तादि चन्द्रस्फुटलिप्तासु ऋणं धनं वा कुर्यात् । अन्येषां तु गत्यंशाभावा-

१ क. °केन्दोर्भु° । २ क. °नान्स° । ३ क. °ताद्योः स्व° । ४ क. °ङ्का मेवंव° ।

त्स्वस्वस्फुटभुक्तिलिप्तिका देशान्तरयोजनैर्निहत्य षष्ट्या विभज्य लब्धा विलिप्ता ग्रहस्फुटविलिप्तास्वृणं धनं वा कुर्यादिति। समरेखायाः पूर्वस्मिन् ऋणं कुर्यात्। अपरस्मिन् धनं कुर्यात्। वक्रिणां व्यत्ययः। अथवा देशान्तरयोजनैर्ग्रहस्य मध्यभुक्तिं निहत्य षष्ट्या विभज्य लब्धं ग्रहमध्यमे संस्कृत्य स्फुटी कुर्यात्। राहोर्मण्डलशोधनात्प्रागेव देशान्तरं कर्म कुर्यात्। चन्द्रतुङ्गस्य च देशान्तरं कर्म कार्यम्॥ ३॥

व्यर्केन्दोस्तिथितिथ्यर्धे ग्रहाद् भान्यनुपाततः।
योगंश्चन्द्रार्कसंयोगात्तदाद्यन्तौ स्वभुक्तितः॥ ४॥

तिथिकरणनक्षत्रयोगपरिज्ञानमाह—व्यर्केन्दोरिति। अर्कहीनं चन्द्रं लिप्ती-कृत्य शून्याब्धिपर्वतैर्विभज्य लब्धाः शुक्लप्रतिपदाद्यास्तिथयो [गता] भवन्ति। पुनस्तमेव लिप्तीकृतं व्यर्केन्दुं शून्यरसाग्निभिर्विभज्य लब्धानि व्येकानि सिंहा-दीनि गतानि करणानि भवन्ति। पुनर्लिप्तीकृतं चन्द्रं व्योमशून्याष्टभिर्विभज्य-लब्धान्यश्विन्यादीनि नक्षत्राणि भवन्ति। पुनरर्कयुतं चन्द्रं लिप्तीकृत्य व्योम-शून्याष्टभिर्विभज्य लब्धा विष्कम्भाद्या गता योगा भवन्ति। शिष्टानि वर्तमा-नतिथिकरणर्क्षयोगानामंशा भवन्ति। तदाद्यन्तौ स्वभुक्तितः। तेषामाद्यन्तकाल-परिज्ञानं स्वभुक्तितस्त्रैराशिकेन ज्ञेयम्। वर्तमानतिथिकरणयोर्गता लिप्ताः षष्ट्या निहत्यार्केन्द्वोर्गत्यन्तरेण विभज्य लब्धा वर्तमानतिथिकरणयोर्गता घटिका भवन्ति। तथैष्यलिप्ताभ्य एष्यघटिका वेदितव्याः। वर्तमाननक्षत्रस्य गता वा एष्या वा लिप्ताः षष्ट्या निहत्य चन्द्रस्फुभुक्त्या विभज्य लब्धा गता एष्याश्च घटिका भवन्ति। वर्तमानयोगस्य गता एष्याश्च लिप्ताः षष्ट्या निहत्यार्केन्द्वो-र्भुक्तियोगेन विभज्य लब्धा वर्तमानस्य योगस्य गता एष्याश्च घटिका भवन्ति। सर्वत्र लिप्तात्मिकैव भुक्तिः। एवं त्रैराशिकादाद्यन्तपरिज्ञानम्। अनुपातत-स्त्रैराशिकेन। अन्येषां ग्रहाणामपि चन्द्रवन्नक्षत्रावगतिः। तदुक्तं—ग्रहाद्भा-नीति॥ ४॥

इति पारमेश्वरे मानसव्याख्याने प्रकीर्णकाधिकारः।

इति पारमेश्वरे मानसव्याख्याने प्रथमोऽध्यायः॥ १॥

---

१ क. °हान् भान्यनु°। २ क. तयोश्च°।

## अथ द्वितीयोऽध्यायः ।

### अथ त्रिप्रश्नाध्यायः प्रारभ्यते ।

नखघ्ना विषुवच्छाया स्वाक्षांशोना त्रिभाजिता ।
उदग्विषुवदाद्यर्कभुजाराशिगुणाश्चरे ॥ १ ॥

अथ त्रिप्रश्नाध्याय उच्यते—नखघ्नेति । सायनार्को यदा मीनान्तं गच्छति तस्मिन्नहनि मध्याह्ने द्वादशाङ्गुलशङ्कोश्छाया विषुवच्छायेत्युच्यते । स्वदेशविषुच्छायाङ्गुलानि नखैर्विंशत्या गुणितानि प्रथमभुजाराशेर्गुणकारो भवति । पुनस्तानि नखघ्नानि विषुवच्छायाङ्गुलानि स्वाक्षांशेन स्वपञ्चमभागेनोनितानि द्वितीयभुजाराशेर्गुणकारो भवति । पुनस्तेभ्यो नखघ्नविषुच्छायाङ्गुलेभ्यस्त्रिभिर्भक्तं तृतीयभुजाराशेर्गुणकारो भवति । उदग्विषुवदाद्यर्कभुजाराशिं गुणाः सायनोऽर्क उदग्विषुवदादिसंज्ञितो भवति । तस्यार्कस्य भुजाराशिगुणाः । एतदुक्तं भवति—इष्टकाले सायनार्कं विन्यस्य भुजाराशीनानीय तद्भुजाराशिषु प्रथमराशिं प्रथमगुणेन द्वितीयं द्वितीयेन तृतीयं तृतीयेन प्रथग्गुणित्वा तेषामैक्यं कुर्यात् । तत्र जाताश्चरविनाड्यो भवन्ति । एवमन्येषामपि चरविनाड्यो ग्राह्याः ॥ १ ॥

वसुभान्यङ्कगोदस्रास्त्रिदन्ताश्च क्रमोत्क्रमात् ।
तत्तच्चरगुणार्धोना मध्यषट्केऽन्ययोदया ॥ २ ॥

वसुभानीति । लङ्कायां मेषराशेरुदयप्रमाणविनाड्यो वसुभानि ( २७८ ) । वृषभस्याङ्कगोदस्राः ( २९९ ) । मिथुनस्य त्रिदन्ताः ( ३२३ ) । क्रमोत्क्रमादेवं क्रमात्पुनरुत्क्रमात्पुनः क्रमात्पुनरुत्क्रमात् । एवं लङ्कायामुदयप्रमाणविनाड्यवगतिः । स्वदेशे तु तत्तच्चरगुणार्धोना मध्यषट्केऽन्यथोदया इति । एतदुक्तं भवति—प्रथमचरगुणार्धहीनानि वसुभानि मीनमेषयोरुदयप्रमाणविनाड्यो भवन्ति । द्वितीयचरगुणार्धहीना अङ्कगोदस्रा कुम्भवृषयोरुदयविनाड्यः । तृतीयचरगुणार्धहीनास्त्रिदन्ता मृगमिथुनयोरुदयविनाड्यः । पुनस्तृतीयचरगुणार्धयुतास्त्रिदन्ताश्चापकर्कटकयोरुदयविनाड्यः । द्वितीयचरगुणार्धयुता अङ्कगोदस्रा वृश्चिकसिंहयोरुदयविनाड्यः । प्रथमचरगुणार्धयुतानि वसुभानि तुलाकन्ययोरुदयविनाड्यः । एवं स्वदेशोदयविनाड्य आनेतव्या इति ॥ २ ॥

स्वोदयैः प्रश्ननाडीभिर्वर्धितोऽर्कोऽनुपाततः ।
लग्नं तद्वद् विवृद्धेऽर्के लग्नतुल्ये तु नाडिकाः ॥ ३ ॥

---

१ क. °षुपदान्यर्क° । २ क. °न्ति । अर्कवदन्ये° ।

अथोदयलग्नानयनं [ तेन ] तेन नाडीकरणं चाऽऽह—स्वोदयैरिति । याव-तीभिर्नाडिकाभिर्वर्धितोऽर्को लग्नसमो भवति तावत्यो नाडिका इत्यर्थः । स्वोद-यविनाडीभिः प्रश्नविनाडीभिश्चानुपाततस्तैराशिकाद्वर्धितोऽर्को लग्नं भवति । तद्वद्विवृद्धेऽर्के लग्नतुल्ये सति नाडिका भवति । एतदुक्तं भवति—तत्कालार्केऽय-नचलनं प्रक्षिप्यार्कस्थितराशेरेष्यानंशान् स्वोदयविनाडीभिर्निहत्य त्रिंशता विभज्य[१] लब्धा विनाडीरिष्टविनाडीभ्यो विशोध्य सायनार्के राशिशेषं प्रक्षिप्य पुन-रिष्टविनाडीभ्य एष्यविनाडीभ्यो यावतां राशीनां विनाड्यो विशोध्याः, अर्कस्थितोपरिराशेरारभ्य तावतां राशीनामुदयविनाडीः संशोध्यार्के तावतो राशीन् प्रक्षिप्य पुनः शिष्टविनाडीस्त्रिंशता निहत्य वर्तमानराशेरुदयविनाडीभि-र्विभज्य लब्धानंशान् गृहीत्वा [ शेषात् षष्टिघ्नात्ताभिरेव विनाडीभिर्विभज्य लब्धा लिप्ताश्च गृहीत्वा ] तान् भागान् सलिप्तान् तस्मिन्नर्के प्रक्षिप्यायनचलनं विशोधयेत् । सोऽर्क उदयलग्नं भवति । नाडीकरणं तु तत्कालार्के उदयलग्ने चायनचलनं प्रक्षिप्यार्कस्यैष्यानंशान् स्वोदयविनाडीभिर्निहत्य त्रिंशता विभज्य लब्धा विनाडीर्गृहीत्वा पुनः सायनलग्नस्य गतानंशान् स्वोदयैर्निहत्य त्रिंशता विभज्य लब्धा विनाडीः पूर्वानीतविनाडीषु प्रक्षिप्य लग्नार्कयोरन्तरालगतरा-शीनां विनाडीश्च प्रक्षिपेत् । ता विनाड्य उदयादतीतविनाड्यो भवन्तीति । रात्रौ तु षड्राशियुतं सायनमर्कं प्रकल्प्यास्तमयाद् गता विनाडीरतीतविनाडीश्च प्रकल्प्य सर्वं कुर्यात् । यदा पुनरिष्टविनाडीभ्य एष्यविनाड्यो न शोध्या-स्तदेष्टविनाडीस्त्रिंशता निहत्य स्वोदयेन विभज्य लब्धान् भागान् सलिप्तां-स्तत्कालसायनार्के प्रक्षिप्यायनचलनं विशोधयेत् । तदुदयलग्नं भवति । नाडिकानयने लग्नार्कयोरेकराशिगतत्वे सति तयोर्विवरांशानामेव विनाडिका ग्राह्याः ॥ ३ ॥

व्यस्तं चरविनाडीभिः स्वाग्नयः संस्कृता दिनम् ।
मध्याह्ननाद्नतनाड्यः स्युर्दिनार्धद्युगतान्तरम् ॥ ४ ॥

दिनप्रमाणानयनं नतानयनं चाऽऽह—व्यस्तमिति । सायनार्कस्य भुजाराशी-श्वरगुणे निहत्य चरविनाडीरानीय ताः षष्ट्या समारोप्य नाडीकृत्य स्वाग्निषु त्रिंशन्नाडीषु व्यस्तं संस्कुर्यात् । सायनार्के मेषादिगे धनं कुर्यात् । सायनार्के

१ क. °ष्य पुनः शिष्टविनाडीभ्यो या° । २ क. °डीर्वि° । ३ क. °ब्धा लिप्ताश्च गृ° ।

तुलादिग ऋणं कुर्यात् । तद्दिनप्रमाणं भवति । दिनप्रमाणं षष्टितो विशोध्य शिष्टं रात्रिमानं भवति । मध्याह्नान्नतनाड्यः स्यु—मध्याह्नात्प्राक् पश्चाद्वा जाता घटिका नतनाड्यो भवन्ति । तदानयनमेवमित्याह—दिनार्धद्युगतान्तरमिति । दिनार्धप्रमाणदिनगतनाड्योरन्तरं नतं भवतीत्यर्थः ॥ ४ ॥

पञ्चघ्नेष्टचरार्धेन पलभाप्तेन संस्कृतात् ।
आद्याच्चरगुणादह्ना दिगूनेन दिनार्धभा ॥ ५ ॥

अथेष्टच्छायाया आनयनसाधनभूताया मध्यच्छायाया आनयनमाह— पञ्चघ्नेति । इष्टकाले सायनरवेश्चरविनाडीरानीय पञ्चभिर्निहत्यार्धीकृत्य पलभायाः स्वदेशविषुवच्छायाङ्गुलेन विभज्य लब्धमाद्यचरगुणे प्रथमभुजाराशेश्चरगुणे संस्कुर्यात् । मेषादिगेऽर्के ऋणं कुर्यात् । तुलादिगेऽर्के धनं कुर्यात् । एवं संस्कृतमाद्यं चरं गुणं दिगूनेनाह्ना नाडिकादशकहीनाभिर्दिनप्रमाणनाडीभिर्विभजेत् । तत्र लब्धं दिनार्धे मध्याह्ने छायाङ्गुलं भवति । शिष्टात् षष्टिघ्नाद् दिगूनेनाह्ना लब्धानि व्यङ्गुलानि भवन्ति । ऋणात्मकस्य पलभाप्तफलस्य द्युचरगुणादाधिक्ये [ सति ] तस्मादाद्यचरं गुणं विशोध्य शिष्टाद् दिगूनेनाह्ना दिनार्धभा भवति । तन्मध्यच्छायाङ्गुलं व्यङ्गुलसहितमेकत्र संरक्षेत् ॥ ५ ॥

विदिग्दिननवाभ्यासान्नतकृत्यंशको युतः ।
विदिग्दिनशतांशेन गुणोऽसौ व्येकको हरः ॥ ६ ॥

इष्टच्छायानयनमाह—विदिगिति । नाडिकादशकहीना दिनप्रमाणनाड्यो विदिग्दिनमित्युच्यते । विदिग्दिननाडीर्नवभिर्निहत्य नतकालनाडीवर्गेण विभज्य लब्धं सावयवं विदिग्दिननाडीशतांशेन योजयेत् । स गुणो भवति । विदिग्दिननतांशः सर्वदाऽवयव एव भवति । अतस्तदवयवो नतकृत्यंशकस्यावयवे प्रक्षिप्यते । स गुणकार इत्यर्थः । व्येकको हरः—असौ गुणकार एकहीनो हारक इत्यर्थः । एवं गुणकारहारकावानीयैकत्र संरक्षेत् । कदाचित् पुनरुदयासन्ने गुणस्य रूपादल्पत्वाद्धारको न संभवति । अतस्तत्र स्फुटतरो गुण आनेतव्यः । तत्प्रकारस्तु—उदयकाले 'विदिग्दिननवाभ्यासात्' इत्यादिना गुणमानीय तद्गुणरूपसंख्ययोर्विवरमिष्टगुणे स्वर्णं कुर्यात् । गुणाद् रूपेऽधिके धनं कुर्यात् । गुणाद् रूपे स्वल्प ऋणं कुर्यात् । स स्फुटगुणः स्यात् । तथा च कश्चिदाह—

१ क. °तघटिकयो° । २ क. °लस्याऽऽद्यच° । ३ क. °कृत्यांश° । ४ क. °त्कालान-तना° । ५ क. °नशतांशः ।

रूपोदयोत्थगुणयोर्विवरेण युतो गुणः।
इष्टस्फुटः स्यादधिके रूपेऽल्पे तु विवर्जितः॥ इति॥ ६॥

**तदैक्याच्छङ्कुवर्गघ्नान्मध्यच्छायागुणाहतेः।**
**कृत्यायुतात्पदं यत्स्यात्तस्माच्छेदाप्तमिष्टभा॥ ७॥**

तदैक्यादिति। तौ गुणकारहारकौ पृथग् विन्यस्यैकमेकेन संयोज्य शङ्कुवर्गेण द्वादशानां वर्गेण निहत्य पुनस्तस्मिन्मध्यच्छायाङ्गुलगुणितस्य गुणकारस्य कृतिं प्रक्षिप्य मूली कुर्यात्। पुनस्तन्मूलं छेदेन हारकेण विभजेत्। तत्र लब्धं द्वादशाङ्गुलशङ्कोश्छायाङ्गुलं भवति। शिष्टात्षष्टिघ्नाच्छेदेन विभज्य लब्धं व्यङ्गुलं भवति। इष्टभा—इष्टकाले द्वादशाङ्गुलशङ्कोश्छायेत्यर्थः। मध्यच्छायाभावे तु गुणहारैक्याच्छङ्कुवर्गघ्नाद् यत्पदं तस्माच्छेदाप्तमिष्टभा स्यात्। तत्र मध्याह्ने कर्णो द्वादश एव। पुनस्तच्छायाङ्गुलं त्रयोदशभिर्निहत्य चतुर्विंशत्या विभजेत्। तत्र लब्धं पुरुषस्य च्छायापदं भवति। शिष्टादष्टघ्नाच्चतुर्विंशत्या लब्धमङ्गुलं भवति॥ ७॥

**छायार्कवर्गसंयोगान्मूलं कर्णस्ततोऽपि भा।**
**इष्टः कर्णः स्वमध्याह्नकर्णान्तरहृतो गुणः॥ ८॥**

अथेष्टच्छायया घटिकानयनाय कर्णानयनमाह—छायार्केति। इष्टकाले पुरुषस्य च्छायापदानि चतुर्विंशत्या निहत्य त्रयोदशभिर्विभजेत्। तत्र लब्धं द्वादशाङ्गुलशङ्कोश्छायाङ्गुलं भवति। एवंविधिना शङ्कुस्थापनेन वा द्वादशाङ्गुलशङ्कोश्छायाङ्गुलं सावयवमानयेत्। तं वर्गीकृत्य तस्मिन् वर्गेऽर्कानां द्वादशानां वर्गं प्रक्षिप्य मूली कुर्यात्। तन्मूलमिष्टकर्णो भवति। मध्यच्छायार्क-वर्गयोर्योगस्य[1] मूलं मध्याह्नकर्णो भवति। एवमिष्टकर्णं मध्याह्नकर्णं च सावयवमानयेत्। ततोऽपि भा [ प्रथमं कर्णमानीय तस्मात् ] कर्णादपि च्छायाऽऽनेतव्या। कर्णवर्गादर्कवर्गं विशोध्य शिष्टस्य मूलं छायेत्यर्थः। कर्णस्तु—

मध्याह्नकर्णो हाराप्तः स्वयुतः कर्ण इष्टजः।
कर्णार्कवर्गविवरपदं शङ्कुप्रभा भवेत्॥

इत्यनेन वेद्यः। निरक्षदेशे तु नखान्यष्टिः सप्त च क्रमाच्चरगुणं प्रकल्प्येष्टचरार्धात्पञ्चघ्नाद् विंशत्या मध्याह्नभामानीय पुनश्चरं विनेष्टभामानयेत्।

---

[1] क. °योगम्°।

इष्टः कर्ण इति । इष्टकर्णान्मध्याह्नकर्णं विशोध्य शिष्टेनेष्टकर्णं विभजेत् तत्र लब्धं गुणो नाम भवति । एवं सावयवं गुणमानयेत् ॥ ८ ॥

विदिग्दिनशतांशोनगुणकेन विदिग्दिनात् ।
नवाहतात्फलं यत्स्यात्तन्मूलं नतनाडिकाः ॥ ९ ॥

विदिग्दिनशतांशं गुणाद् विशोध्य तेन गुणेन नवाहतं विदिग्दिनं विभजेत् । तत्र यल्लब्धं तस्य मूलं नतनाडिका भवन्ति । नतनाडिका दिनार्धप्रमाणाद् विशोध्य शिष्टं दिनस्य गता वा एष्या वा घटिका भवन्ति । अत्र ग्रामे विषुवच्छायादेशान्तरयोजनानि प्रदर्श्यन्ते—

*ग्रामादश्वत्थाख्यादस्माद् धृतियोजने तु समरेखा ।
प्राच्यामत्र तु फलभा स्यात्सधृतिव्यङ्गुलाङ्गुलद्वितयम् ॥

इति पारमेश्वरे मानसव्याख्याने त्रिप्रश्नाधिकारः ॥

इति पारमेश्वरे मानसव्याख्याने द्वितीयोऽध्यायः ॥

---

## अथ तृतीयोऽध्यायः ।

### अथ ग्रहणाध्यायः प्रारभ्यते ।

ग्रहयोरन्तरे स्वल्पेऽनल्पभुक्तेः पुरःसरः ।
यदाऽल्पगतिरेष्यः स्यात्तदा योगोऽन्यथा गतः ॥१॥

अथ ग्रहसमागमादिपरिज्ञानार्थमाह—ग्रहयोरिति । यदा ययोर्ग्रहयोरन्तरं स्वल्पं भवति तदा तयोः समागमान्वेषणं कार्यम् । तत्र यदाऽनल्पभुक्तेरधिकभुक्तेः पुरस्तादल्पगतिग्रहो भवति तदा तयोः समागम एष्यः स्यात् । यदाऽल्पगतेः पुरस्तादधिकभुक्तिश्चेद् योगो गतोऽस्तीति इत्यर्थः । ग्रहयोर्वक्रकाले त्वधःस्थितः पुरस्ताद् गतो भवति ॥ १ ॥

युक्त्या भिन्नदिशोर्गत्योरन्तरेणैकदिक्कयोः ।
ग्रहान्तराद् दिनानि स्युस्तैः समावनुगातत ॥ २ ॥

* अश्वत्थाख्यो ग्रामः 'आलत्तूर' इति केरलेषु प्रसिद्धः । व्याख्याकृतः परमेश्वरस्यायम् अभिजनप्रदेशः ।

युक्त्येति । भिन्नदिशयोर्वक्रावक्रगतयोर्ग्रहयोर्गतियोगेनैकदिक्कयोः स्पष्टगत्योर्वक्रगत्योश्च गत्यन्तरेण ग्रहयोरन्तराल्लिप्तीकृता[ द् ]दिनानि भवन्ति । शिष्टात् षष्टिघ्नान्नाड्यश्च भवन्ति । इष्टकालसमागमकालयोरन्तरालदिनानीत्यर्थः । अत्र गतिर्लिप्तात्मिका स्यात् । तैः समावनुपाततस्त्रैराशिकाद् ग्रहौ समौ कुर्यात् । एतदुक्तं भवति—पर्वणि मध्याह्ने चन्द्रार्कयोर्मध्यममानीय तस्मिन् मध्यमे देशान्तरं भुजाविवरं च कृत्वा स्फुटौ कुर्यात् । तौ स्फुटौ चन्द्रार्कौ भवतः । पुनस्तयोरन्तरं लिप्तीकृत्य षष्ट्या निहत्य स्फुटगत्यन्तरलिप्ताभिर्विभजेत् । तत्र लब्धं घटिकादिसमागमकालो भवति । मध्याह्नात्पर्वान्तकाल इत्यर्थः । पुनस्तन्नाडिकाभिरर्केन्द्वोः स्फुटगती पृथङ् निहत्य षष्ट्या विभज्य लब्धा लिप्ता मध्याह्नार्के तच्चन्द्रे चर्णं धनं वा कुर्यात् । एष्यो योगश्चेद् धनं कुर्यात् । योगो गतश्चेदृणं कुर्यात् । तदाऽर्केन्दू समौ भवतः । पुनस्ताः समागमघटिका एकत्र संरक्षेत् । चन्द्रग्रहणे तु चन्द्रषड्भयुतार्कयोरन्तरान्नाड्यः साध्याः । एवमन्येषामपि समागमकालानयनं समीकरणं च कुर्यादिति । भुजाविवरं तु ग्रहस्य मध्यभुक्तिकलाषडंशं रविभुजाफललिप्ताभिर्निहत्य दिक्षड्गुणैः ( ३६१० ) एभिर्विभज्य लब्धा लिप्ता भानुभुजावशाद् ग्रहमध्ये ऋणं धनं वा कुर्यात् । एतदस्माभिः प्रदर्श्यते—

"भुक्तिलिप्ता षडंशघ्नरविदोःफललिप्तिकाः ।
दिक्षड्गुणाप्ताः स्वर्णाः स्युर्लिप्ता भानुभुजावशात्" ॥ इति ।

एतद् भेदबाहुल्याभावात्किलाऽऽचार्येण नोपदिष्टम् ॥ २ ॥

भानोर्बिम्बा रविच्छेदहृता खखकृताचलाः ।
शशिनः खखभूरामाश्चन्द्रमन्दहरोद्धृताः ॥ ३ ॥

अथार्कादीनां बिम्बलिप्तानयनमाह—भानोरिति । खखकृताचलान् (७४००) रविस्फुटच्छेदेन विभजेत् । तत्र लब्धं लिप्तादि रवेर्बिम्बं भवति । रविबिम्बव्यासलिप्तेत्यर्थः । खखभूरामान् ( ३१०० ) चन्द्रस्य मन्दस्फुटच्छेदेन विभज्य लब्धं शशिनो बिम्बं भवति । मन्दहर इति मन्दग्रहणं द्वितीयस्फुटे रूपहारकनिरासार्थम् ॥ ३ ॥

१ क. °न्तं लि° । २ क. °मकालनाडिका । ३ क. °हरेर्धृ° ।

छायाग्रहः सषड्भोऽर्कस्तन्मण्डलकलामितिः ।
चन्द्रमार्गे शशिच्छेदहृताः खखगुणोरगाः ॥ ४ ॥

भूछायावस्थितिं तद्व्यासानयनं चाऽऽह—छायेति । षड्राशियुतस्तत्कालार्कः छायाग्रहो भवति । अर्कस्य सप्तमराशौ सदा भूछाया वर्तत इत्यर्थः । तन्मण्डलकलामितिस्त्वेवमित्याह—शशिच्छेदेति । खखगुणोरगान् ( ८३०० ) चन्द्रस्य स्फुटच्छेदेन विभजेत् । तत्र लब्धं लिप्तादि च्छायाबिम्बं भवति । चन्द्रमार्गे चन्द्रकक्षायामेवं बिम्बप्रमाणमित्यर्थः । भूछायया हि चन्द्रश्छाद्यते । तरणिस्तु चन्द्रमसा छाद्यते ॥ ४ ॥

अङ्गानीशा नखाः सूर्या द्वियमा दशताडिताः ।
स्वशीघ्रच्छेददिग्योगहृता बिम्बानि भूसुतात् ॥ ५ ॥

अङ्गानीति । कुजस्य दशताडितान्यङ्गानि ( ६० ) । बुधस्य तथा ईशाः ( ११० ) । गुरोस्तथा नखाः ( २०० ) । शुक्रस्य तथा सूर्याः ( १२० ) । मन्दस्य तथा द्वियमाः ( २२० ) । एते स्वशीघ्रच्छेददिग्योगहृता दशसहितेन स्वशीघ्रच्छेदेन हृता भूसुताद् बिम्बानि भवन्ति ॥ ५ ॥

कृतनेत्रभुजङ्गाङ्गदिशो दशहताः क्रमात् ।
पातभागाः कुजादीनां पातक्षेपौ न भास्वतः ॥

कृतनेत्रेति । कृतादीनि दशघ्नानि कुजादीनां पातभागा भवन्ति । तानि—कुजस्य ४० । बुधस्य २० । गुरोः ८० । शुक्रस्य ६० । मन्दस्य १०० । पातक्षेपौ न भास्वतः—सूर्यस्य पातः क्षेपश्च न भवतः । प्रक्षेपोऽयं श्लोक इति केचित् ॥

मन्दस्फुटात्स्वपातोनाद् ग्रहाच्छीघ्राद् ज्ञशुक्रयोः ।
भुजाः षट्कृतिसूर्याष्टिनवाष्टघ्यष्टिहृताः क्रमात् ॥ ६ ॥
चन्द्राद् विक्षेपलिप्ताः स्युस्ताः कुजाद् व्यासताडिताः ।
शीघ्रच्छेदाहृताः स्पष्टाः स्वर्णाख्या दक्षिणोत्तराः ॥ ७ ॥

मन्दस्फुटादिति । शशिकुजगुरुमन्दानां स्वमन्दस्फुटात्स्वपातभागान् विशोधयेत् । बुधशुक्रयोस्तु स्वमन्दभुजाफलविपरीतसंस्कृतास्स्वशीघ्रोच्चात्स्वपातभागान् विशोधयेत् । अत्र मन्दफलविपरीतसंस्कारः संप्रदायात् सिद्धः । एवं स्वपातभागान् विशोध्य शिष्टस्य भुजज्यामानीय षट्कृत्यादिभिर्गुणयेत् । तत्र चन्द्रस्य "चतुस्त्र्येकघ्न" इत्यादिविधिनाऽऽनीतां भागात्मिकां भुजज्यामानीय तां

१ क. °शगुणाः क्र° । २ क. °क्षेपौ न° ।

षट्कृत्या षट्त्रिंशता गुणयेत्। कुजस्य तथाभूतां भुजज्यां सूर्यैर्द्वादशभिर्गुणयेत्। बुधस्याष्टया षोडशभिः, गुरोर्नवभिः, शुक्रस्याष्टया षोडशभिः, मन्दस्याप्यष्टया षोडशभिः। एवं स्वेन स्वेन गुणकारेण गुणिता भागात्मिका भुजज्या विक्षेपलिप्ता भवन्ति। चन्द्रस्य ता एव स्फुटा भवन्ति। कुजादीनां तु ता विक्षेपलिप्ताः स्वेन स्वेन स्फुटव्यासेन निहत्य स्वशीघ्रच्छेदेन विभजेत्। तत्र लब्धाः स्पष्टा विक्षेपलिप्ता भवन्ति। स्फुटा भवन्तीत्यर्थः। स्वर्णाख्या दक्षिणोत्तराः पातोनभुजाया धनत्वे दक्षिणविक्षेपो भवति। पातोनभुजाया ऋणत्वे उत्तरविक्षेपो भवति। एवं विक्षेपमानयेत् ॥ ६ ॥ ७ ॥

विक्षेपयोः समदिशोरन्तरं भिन्नयोर्युतिः।
बिम्बान्तरं लघुन्यस्मिन् भेदो मानार्धयोगतः ॥ ८ ॥

अथ ग्रहणस्य सदसद्भावपरिज्ञानार्थमाह—विक्षेपयोरिति। ययोर्ग्रहयोर्ग्रहणं निरूप्यते तयोर्द्वयोः समदिशोर्विक्षेपयोरेकदिक्कत्वे विक्षेपयोरन्तरं कुर्यात्। भिन्नदिक्कत्वे विक्षेपयोर्योगं कुर्यात्। तद्बिम्बान्तरं बिम्बमध्ययोरन्तराललिप्तेत्यर्थः। अस्मिन् बिम्बान्तरे मानार्धयोगाद् बिम्बैक्यार्धाद् लघुन्यल्पे सति भेदः स्याद् ग्रहणं भवेत्। मानार्धयोगादधिके बिम्बान्तरे सति ग्रहणं न स्यात्। सूर्यग्रहणे चन्द्रग्रहणे च चन्द्रविक्षेप एव बिम्बान्तरं भवति। अर्कभूछाययोर्विक्षेपाभावात्। किंत्वर्कग्रहणे सति संस्कृतविक्षेपो विक्षेपः स्यात् ॥ ८ ॥

ग्रहोनं[1] लग्नमक्षघ्नं लम्बनघ्नुगतं युतौ।
[लम्बनघ्नुगतात्पञ्चदशभिर्नतसाधनम्।
दिनार्धेन नतं मध्यं लम्बनस्फुटपर्वणः] ॥
लम्बनं द्व्यक्षकर्णाप्तं नतोनाहतविंशतेः ॥ ९ ॥

अथ सूर्यग्रहणे पर्वणि संस्कारार्थं लम्बनकालानयनमाह—ग्रहोनमिति। मध्याह्नात्प्रागर्केन्द्वोः समागमश्चेत्पूर्वानीताः समागमकालघटिका दिनार्धप्रमाणाद् विशोधयेत्। मध्याह्नतः परस्तात्समागमश्चेत्समागमं घटिकादिनार्धप्रमाणे प्रक्षिपेत्। एवं कृत उदयात्पर्वान्तघटिका भवन्ति। एवं दिने समागमश्चेत्। रात्रौ चेत्समागमघटिकाभ्यो दिनार्धं शोधयेत्। तत्र शिष्टा रात्रेर्गता गन्तव्या वा नाड्यः स्युः। एवं पर्वान्तकालं विज्ञाय तत्पर्वान्त उभयलग्नमानीय तस्मादुदयलग्नात्स्फुटार्कं विशोध्य शिष्टस्य राशीनक्षैः पञ्चभिर्गुणयेत्। भागान् दशभिर्निहत्य षष्ट्या समारोप्य राशिस्थाने प्रक्षिपेत्। [राशिस्थाननाड्यात्मक-

[1] क. °होनल°।

खांशा दशभिर्निहन्यन्ते ] । तत्र राशिस्थानगता घटिका भवन्ति । भागस्थानगता विनाड्यः । एतद्युतौ ग्रहणे लम्बनद्युगतं भवति । लम्बनानयनाय द्युगतकाल इत्यर्थः । पुनः सर्वदाऽपि पञ्चदश नाडिका एव दिनार्धं परिकल्प्य तद्दिनार्धलम्बनद्युगतनाडीभ्यां नतनाडीरानीय तं नतं विंशतिनाडिकाभ्यो विशोध्य शिष्टं तेनैव नतेन नाडिकात्मकेन निहत्य द्व्यक्षकर्णेन विभजेत् । द्विगुणितविषुवच्छायाकर्णेनेत्यर्थः । तत्र लम्बनाडिकादिलम्बनकालो भवति । यत्तु नश्वरवशात्कल्पितं दिनार्धमिति केनचिद्व्याख्यातं तदसत् । दृक्क्षेपलग्नेऽपि लम्बनसंभवात् ॥ ९ ॥

प्राक्पश्चाल्लम्बनेनोनयुक्तं दिनगतं स्फुटम् ।
तन्नताक्षांशहीनः प्राक् सूर्यः स्वार्कोऽन्यथा युतः ॥ १० ॥

लम्बनस्य धनर्णविभागमाह प्राक्पश्चादिति । प्राक् पश्चाच्च क्रमेण लम्बनोनयुक्तं दिनगतं स्फुटं भवति । एतदुक्तं भवति—लम्बनद्युगते पञ्चदशनाडिकात्मकाद् दिनार्धादूने सति लम्बनघटिकाः पर्वान्तद्युगतघटिकाभ्यः शोधयेत् । लम्बनद्युगते पञ्चदशनाडिकात्मकाद् दिनार्धादधिके सति लम्बनघटिकाः पर्वान्तद्युगतघटिकाभ्यो योजयेत् । एतद् ग्रहणमध्यकाल इत्यर्थः ।

इदानीमवनत्यानयनाय स्वार्कमाह—तन्नतेति । तेन लम्बनसंस्कृतपर्वान्तद्युगतेन चरवशात्कल्पितेन दिनार्धेन च नतनाडिकामानीय तां नतनाडिकामक्षैः पञ्चभिर्विभज्य लब्धान् राशीन् गृहीत्वा तच्छेषं त्रिंशता निहत्य पञ्चभिर्विभज्य लब्धान् भागांश्च गृहीत्वा तच्छेषं षष्ट्या निहत्य पञ्चभिर्विभज्य लब्धा लिप्ताश्च गृहीत्वा तान् राश्यादीन् तत्कालार्के ऋणं धनं वा कुर्यात् । लम्बनसंस्कृतपर्वान्तघटिका दिनार्धादूनाश्चेदृणं कुर्यात् । अधिका चेद्धनं कुर्यात् । प्राक्कपाल ऋणं पश्चात्कपाले धनमित्यर्थः । एवं संस्कृतोऽर्कः स्वार्कसंज्ञितो भवति । सूर्यशब्देन च्छाद्यग्रहो विवक्षितः ।

" अङ्गुलानि द्वादशात्र व्यङ्गुलानि त्रयोदश ।
ग्रामेऽक्षकर्णो निर्दिष्टः पूर्वैर्गणितकोविदैः " ॥ १० ॥

---

१ क. °तघटिकासु प्रक्षिपेत । एवं लम्बनसंस्कृतं पर्वान्तद्युगतं स्फुटं भवतीति । त° ।

तदिष्टचरषड्घातपलभातेन संस्कृतात् ।
पलभोनाह (ह)तात्खाक्षाद् द्विघ्नात्तत्त्वैर्हृता नतिः ॥११॥

इदानीं नतलिप्तानयनमाह—तदिष्टेति । तस्य खार्कस्य सायनस्य चरविनाडीरानीय ता विनाडीः षड्भिर्निहत्य पलभया विषुवच्छायाङ्गुलेन विभज्य लब्धं कुत्रचिद् विन्यस्य पुनः खाक्षात् पञ्चांशतः पलभाङ्गुलं विशोध्य शिष्टं तेनैव पलभाङ्गुलेन निहत्य तस्मिन् पूर्वपलभाप्तं फलं संस्कुर्यात् । सायनखार्के मेषादिगे ऋणं कुर्यात् । [ सायनखार्के तुलादिगे धनं कुर्यात् ] । एवं संस्कृतं पलभोनाहतं खाक्षं द्वाभ्यां निहत्य तत्त्वैः पञ्चविंशत्या विभजेत् । तत्र लब्धा नतिलिप्ता भवन्ति । यदा पुनः पलभाप्तमृणात्मकं फलं पलभोनाहतखाक्षादधिकं भवति तदा तस्मात् [ पलभाप्त ] फलात्पलभोनाहतं खाक्षं विशोध्य शिष्टाद् द्विघ्नाद् तत्त्वैर्लिप्ता भवन्ति । खाक्षो नित्यदक्षिणो भवति । यदा पलभाप्तमृणात्मकं फलं फलभोनाहतखाक्षादधिकं भवति तदा नतिरुत्तरा भवति । अन्यथा सदैव दक्षिणा नतिर्भवति । खार्कवशात् [ तदा ] खाक्षवशाच्च दिग् विज्ञेयेत्यर्थः । विश्लेषे सर्वत्र श्लिष्टस्य दिग् ग्राह्या ॥ ११ ॥

तात्कालिकेन्दुविक्षेपो युक्तो नत्यैकदिक्कया ।
हीनोऽन्यथा युतौ स्पष्टश्छादकोऽधः स्थितो ग्रहः ॥१२॥

अथ नतिविक्षेपयोर्योगविश्लेषेण स्फुटविक्षेपानयनमाह—तात्कालिकेति । येन ध्रुवगतेन खार्कः साधितस्तत्कालजस्य चन्द्रस्य विक्षेपमानीय तद्विक्षेपनत्योरेकादिक्कयोर्योगं कुर्यात् । भिन्नदिक्कयोस्तु विश्लेषं कुर्यात् । तद्युतौ ग्रहणे स्फुटविक्षेपो भवति । विश्लेषे शिष्टस्य दिग् ग्राह्या । एवं नतिविक्षेपयोर्योगविश्लेषाभ्यां सूर्यग्रहणे स्फुटविक्षेपः साध्यः । चन्द्रग्रहणे तु पातोनचन्द्रादानीत एव स्फुटविक्षेपो भवति । छादकोऽधः स्थितो ग्रहः—अधःस्थितो ग्रहश्छादकः । ऊर्ध्वस्थितश्छाद्यः । चन्द्रग्रहणे तु भूछाया छादकश्चन्द्रश्छाद्यः । ऊर्ध्वाधोविभागस्तु भानामधः शनैश्चरसुरगुरुभौमार्कशुक्रबुधचन्द्रा इत्यनेन वेद्यम् ॥ १२ ॥

---

१ क. °ता । २ क. °ता सा° । ३ क. °क्षा द्विघ्ना त° । ४ क. °नतिलि । ५ क. पञ्चाशत प° । ६ क. °त्वर्नतिलि° । ७ क. °कयोः । ८ क. °स्पष्टो छा° ।

बिम्बान्तरकृतिं प्रोज्झ्य मानैक्यार्धकृतेः पदम् ।
षष्टिघ्नं समदिग्गत्योरन्तराप्तं स्थितेर्दलम् ॥ १३ ॥

अथ स्थित्यर्धनाडिकानयनमाह—बिम्बान्तरेति । मानैक्यार्धकृतेर्बिम्बयोगार्धवर्गाद् बिम्बान्तरस्य स्फुटविक्षेपस्य वर्गं विशोध्य शिष्टस्य मूलं षष्ट्या निहत्य गत्यन्तरेण विभजेत् । तत्र लब्धं घटिकादिस्थित्यर्धकालो भवति । समदिग्गत्योरिति । कुजादीनां समागम एकस्य वक्रगतत्वेऽन्यस्य क्रमगतत्वे च सति भुक्तियोगेन हरणं कार्यम् । बिम्बान्तरं तु विक्षेपयोः समदिशोरित्यादिनोक्तमेव ॥१३॥

स्थित्यर्धे चन्द्रविक्षेपकृतेन्द्रांशयुतोनिते ।
स्पष्टे स्पार्शिकमूनं स्याद् द्युविक्षेपेऽन्यथा महत् ॥१४॥

स्थित्यर्ध इति । पूर्वानीतां स्थित्यर्धनाडिकामुभयत्र विन्यस्यैकस्माच्चन्द्रविक्षेपस्य कृतेन्द्रांशं चतुश्चत्वारिंशदधिकशतांशं विशोधयेत् । अन्यस्मिन् कृतेन्द्रांशं प्रक्षिपेत् । एतदुक्तं भवति—विक्षेपलिप्तां विलिप्तीकृत्य कृतेन्द्रैः ( १४४ ) विभज्य लब्धं विनाडिकासु संस्कुर्यात् । एवं कृते स्थित्यर्धे स्फुटे भवतः । स्पार्शिकमूनं स्याद् द्युविक्षेपेऽन्यथा महत्—पातोनचन्द्रस्य युग्मपदगतत्वे तयोरूनं स्पर्शस्थित्यर्धं स्यात् । महन्मोक्षस्थित्यर्धम् । अन्यथौजपदगतत्वे महत्स्पार्शिकमूनं मोक्षस्थित्यर्धं भवति । ग्रहचन्द्रग्रहण एवं कृते स्थित्यर्ध एव स्फुटे भवतः । सूर्यग्रहणे तु वक्ष्यमाणसंस्कारयुते ते स्फुटे भवतः ॥ १४ ॥

तदूनयुक्तमासान्तद्युगते कृतलम्बने ।
स्पर्शमोक्षौ भवेद्भानोर्न लग्नादिन्दुपर्वणि ॥ १५ ॥

तदूनेति । केवलात्पर्वान्तद्युगतात्स्पर्शस्थित्यर्धं विशोध्य शिष्टं स्पर्शपर्व भवति । केवलपर्वान्तद्युगते मोक्षस्थित्यर्धं प्रक्षिपेत् । तन्मोक्षपर्व भवति । ते एव तदूनयुतमासान्तद्युगते इत्युच्येते । पुनः स्पर्शपर्वणि मोक्षपर्वणि चाऽर्कमानीय लग्नं चाऽऽनीय “ ग्रहोनं लग्नम् ” इत्यादिनोभयत्रापि लम्बनमानयेत् । तत्र स्पर्शलम्बनं स्पर्शपर्वणि स्पर्शलम्बनद्युगतवशात्संस्कुर्यात् । मोक्षलम्बनं मोक्षपर्वणि मोक्षलम्बनद्युगतवशात्संस्कुर्यात् । एवं लम्बनसंस्कृते स्पर्शमोक्षपर्वणी स्फुटे भवतः । स्पर्शमध्यपर्वान्तरं मोक्षमध्यपर्वान्तरं च स्फुटे स्थित्यर्धे भवतः । एवं भानोः सूर्यग्रहणे । न लग्नादिन्दुपर्वणि—इन्दुग्रहणे “ ग्रहोनं लग्नम् ” इत्यादिनाक्तं लम्बनसंस्कारं नतिसंस्कारं च न कुर्यादित्यर्थः ॥ १५ ॥

१ क. °न्तरलिप्ताभिर्वि° ।

द्युतिमध्यनताभ्यस्ता पलभा भानुभाजिता ।
प्रागुदग्दक्षिणं पश्चाद्वलनं रदमण्डले ॥ १६ ॥

अथाक्षवलनानयनमाह—द्युतिमध्येति । द्युतिमध्यनतेन तत्तद्ग्रहस्य ग्रहण मध्यकालजेन नतेन गुणितात्पलभाङ्गुलाद् द्वादशभिराप्तं वलनाङ्गुलं भवति अत्र नतनाड्यः पञ्चदशनाडिकाभ्योऽधिकाश्चेत्ता नाडीस्त्रिंशता विशोध्य शिष्टा नतनाड्यो भवन्ति । प्राक्कपाले तदुदग्वलनं भवति । पश्चात्कपाले दक्षिणवलनं भवति । रदमण्डले द्वात्रिंशदङ्गुले व्यासमण्डल एतद्वलनं भवतीत्यर्थः ॥१६॥

ग्रहणायनयोरल्पमन्तरं द्विघ्नमायनम् ।
वलनं स्यात्तयोर्योगवियोगात्पारमार्थिकम् ॥ १७ ॥

अथाऽऽयनवलनानयनं वलनद्वययोगविश्लेषेण स्फुटवलनानयनं चाऽऽह—ग्रहणायनयोरिति । सायनस्य च्छाद्यग्रहस्य मेषादिगतत्वे तद्ग्रहस्य त्रयाणां राशीनां चान्तरमानयेत् । सायनग्रहे तुलादिगे सति तद्ग्रहस्य नवानां राशीनां चान्तरमानयेत् । एवमानीतं ग्रहायनान्तरं राश्यादिकं द्विघ्नं वलनाङ्गुलं भवति । राशिस्थानस्थमङ्गुलं भवतीत्यर्थः । ग्रहे मृगादिग उत्तरमेतद्वलनम् । ग्रहे कर्क्यादिगे दक्षिणं वलनम् । एवं सायनग्रहस्याऽऽयनवशाद् दिग् विज्ञेया । आयनवलनं स्थूलं स्यात् । दृक्कर्मार्थं तु सूक्ष्मतरमानयेत् । तत्प्रकारस्तु सायनग्रहस्य कोट्युत्क्रमज्या स्वपञ्चभागहीनस्फुटमायनवलनं भवति । एतदस्माभिः प्रदर्श्यते—

ग्रहस्योत्क्रमकोटिज्या स्वपञ्चांशेन वर्जिता ।
आयनं वलनं स्पष्टं भवेत्तु रदमण्डले ॥ इति

तयोर्योगवियोगात्पारमार्थिकमक्षवलनायनवलनयोरेकदिक्कयोर्योगं कुर्यात् भिन्नदिक्कयोर्विश्लेषं कुर्यात् । तत्पारमार्थिकं वलनं भवति । स्फुटतरं वलनमित्यर्थः ॥ १७ ॥

षडक्षाङ्गुलयष्ट्यग्रे दृङ्मध्यादंशकोऽङ्गुलम् ।
दिग्वृत्तपरिधौ प्राची वलनाग्रे ततोऽपरा ॥ १८ ॥

अथ ग्रहयोः समागमे यष्टियन्त्रेण तयोरन्तरांशविज्ञानं वलनवशाद्दिग्विभागं चाऽऽह—षडक्षेति । षट्पञ्चाशदङ्गुलप्रमाणामेकां यष्टिं कृत्वा तदग्र एकैकाङ्गुलान्तराङ्कितां काञ्चिद् यष्टिं तिर्यङ् निधाय तां यष्टिं दृशोर्मध्ये विन्यस्य ग्रहानी-

क्षेत। यथा तिर्यगवस्थितयष्टिपृष्ठे ग्रहलग्नौ दृश्येते। तत्र ग्रहयोरन्तरे यावन्त्य-ङ्गुलानि भवन्ति तावन्तस्तयोरन्तरभागा भवन्ति।

दिग्वृत्तेत्यादिना परिलेखनेन ग्रहणाकृतिज्ञानमुच्यते। तदर्थं षोडशाङ्गुलप-माणेन सूत्रेण वृत्तमालिखेत्। तद् दृङ्मण्डलमित्युच्यते। तद् वृत्तपरिधौ प्राची दिग् वलनाग्रे स्यात्। ततोऽपरा पश्चिमा दिग् भवति। एतदुक्तं भवति—तस्मिन् वृत्ते पूर्वापरसूत्रं दक्षिणोत्तरसूत्रं च कुर्यात्। ते दृष्टयनुसारिणी दिक्सूत्रे भवतः। पुनः पूर्वापरसूत्रस्य पूर्वाग्रपरिधिसंपाताद् यथादिशं वलनाङ्गुलं परिधौ नीत्वा तत्र बिन्दुं कृत्वा तद्बिन्दुं प्राचीं दिशं परिकल्प्य पूर्वापरदक्षिणोत्तरे सूत्रे कुर्यात्। ते ग्रहगत्यनुसारिणी दिक्सूत्रे भवत इति ॥ १८ ॥

तत्पूर्वापररेखातो विक्षेपान्तरिता परा।
रेखा मन्दगतेर्मार्गस्तद्वच्छीघ्रगतेरपि ॥ १९ ॥

तत्पूर्वेति। वलनवशात्कल्पिता या पूर्वापररेखा तद्रेखातो दक्षिणेनोत्तरेण वा छाद्यग्रहविक्षेपलिप्तासमानान्तराङ्गुले वलनानुसारिणीं पूर्वापरां रेखां कुर्यात्। सा मन्दगतेश्छाद्यग्रहस्य मार्गो भवति। तस्यां छाद्यग्रहो गच्छतीत्यर्थः। तद्वच्छी-घ्रगतेश्छादकग्रहस्यापि स्वविक्षेपान्तरे वलनानुसारिणीं [पूर्वापरां] रेखां कु-र्यात्। सा शीघ्रगतेश्छादकस्य मार्गो भवति। एवं सूर्यग्रहणे। चन्द्रग्रहणे तु मन्दगतिश्छादकः शीघ्रगतिश्छाद्यः। सूर्यग्रहणे तु रवेर्विक्षेपाभावाद् वृत्तमध्य-गता वलनानुसारिणी रेखैव सूर्यस्य मार्गः स्यात्। चन्द्रग्रहणेऽपि सैव रेखा छायाग्रहस्य मार्गः। उभयत्रापि चन्द्रस्य स्वविक्षेपान्तरकृता रेखा मार्गः स्यात् ॥ १९ ॥

वृत्तमध्याद् यथायावद्विक्षेपैर्ग्रहमध्ययोः।
ग्रहयोर्युतिमध्यं स्यात्ततोऽन्यत्र ग्रहान्तरात् ॥ २० ॥

वृत्तमध्यादिति। वृत्तमध्यात्स्वविक्षेपाग्रे मध्यं ययोस्तयोर्लिखितयोर्युतिमध्यं स्यात्। एतदुक्तं भवति—वलनवशात्कृता या दक्षिणोत्तरा रेखा तद्रेखा चन्द्रमार्ग-संपातं मध्यं कृत्वा चन्द्रबिम्बार्धलिप्तासमानाङ्गुलप्रमाणेन सूत्रेण वृत्तमालिखेत्। पुनः दृङ्मण्डलमध्यमेव मध्यं कृत्वा सूर्यबिम्बार्धलिप्तासमानाङ्गुलसूत्रेण सूर्यबिम्बं चाऽऽलिखेत्। तत्र सूर्यबिम्बस्य यावद्भागश्चन्द्रबिम्बेन च्छाद्यते तावद्भाग-

१ क. ॰नाङ्गुलान्तरे व॰। २ क. ॰क्षेपा ग्र॰। ३ क. ॰न चन्द्रबिम्बमा॰।

स्त्वदर्शयो भवति । चन्द्रग्रहणे तु सूर्यबिम्बवच्छायाबिम्बमालिखेदिति । ततोऽन्यत्र ग्रहान्तरात्—मध्यकालादन्यत्रेष्टकाले ग्रहान्तराद् ग्रहगत्यन्तरलिप्ताङ्गुलैस्तत्कालवलनेन तत्कालविक्षेपेण च युक्तित इष्टग्रासपरिलेखनं द्रष्टव्यम् । एतद् ग्रन्थविस्तरभयादस्माभिर्नात्र प्रदर्शितम् ॥ २० ॥

इति पारमेश्वरे मानसव्याख्याने ग्रहणाध्यायस्तृतीयः समाप्तः ॥

---

अथ चतुर्थोऽध्यायः ।

[ अथ दृक्कर्माधिकारः ] ।

**तिथिघ्नाच्चरसंस्कारात्स्वोदयेनांशकादिकम् ।**
**स्वर्णं क्षेपवशात्कार्यं ग्रहे षड्भयुतेऽन्यथा ॥ १ ॥**

अथ चन्द्रादीनामुदयास्तमयकालपरिज्ञानार्थं प्रथमं दृक्कर्माऽऽह—तिथिघ्नादिति । चरतार्नांशेत्यादिना वक्ष्यमाणेन विधिना चरसंस्कारमानीय तत्पञ्चदशभिर्निहत्योभयत्र विन्यस्यैकं ग्रहस्थितराश्युदयविनाडीभिर्विभजेत् । अन्यत्तु ग्रहस्थितराशेः सप्तमराश्युदयविनाडिकाभिर्विभजेत् । तत्र लब्धं द्वयं भागादिकं क्रमेण ग्रहस्फुटे षड्राशियुते ग्रहस्फुटे च संस्कुर्यात् । विक्षेपस्य ऋणत्वे सति ग्रहस्थितराश्युदयाप्तं ग्रहे ऋणं कुर्यात् । ग्रहस्थितराशेः सप्तमराश्युदयाप्तं षड्राशियुते ग्रहे धनं कुर्यात् । विक्षेपस्य धनत्वे तु ग्रहे धनं कुर्यात् । षड्राशियुते ग्रहे ऋणं कुर्यात् ॥ १ ॥

**ग्रहस्योत्क्रमकोटिघ्नात्क्षेपाच्च्यंशात्स्वलग्नभात् ।**
**क्षेपकोट्योः समान्य(न)त्व स्वर्णं भागाद्यपि क्रमात् ॥ २ ॥**

अथ द्वितीयं दृक्कर्माऽऽह—ग्रहस्येति । सायनस्य ग्रहस्य कोट्युत्क्रमज्यामेकेभिचतुर्घ्नराश्यैक्यमित्युत्क्रमाविधिनाऽऽनीय तां भागात्मिकां स्वविक्षेपचतुर्भागलिप्ताभिर्निहत्य स्वलग्नेन ग्रहस्थितराश्युदयेन तत्सप्तमराश्युदयेन च पृथग्विभज्य लब्धं भागादिकं क्रमेण प्रथमदृक्कर्मयुते ग्रहस्फुटे प्रथमदृक्कर्मयुतषड्राशियुते ग्रहे च संस्कुर्यात् । क्षेपकोट्योरुभयोर्युगपदृणत्वे वा धनत्वे वा सति तत्फलं ग्रहे षड्राशियुते ग्रहे च धनं कुर्यात् । क्षेपकोट्योरेकस्य धनत्वेऽन्यस्य ऋणत्वे सति तत्फलं ग्रहे षड्राशियुते ग्रहे वर्णं कुर्यात् । एवं दृक्कर्मद्वययुतो ग्रहो ग्रहस्योदयलग्नं भवति । दृक्कर्मद्वययुतः षड्राशियुतो ग्रहो ग्रहस्यास्तलग्नं भवति । एवं दृक्कर्मद्वयं ग्रहस्फुटे षड्राशियुते ग्रहे वा यथासंभवं कृत्वा मौढ्यारम्भादि विद्यात् ॥ २ ॥

---

१ क. °स्येकर्म° । २ क. °भाक् । ३ क. °तीयतृतीयं । ४ क. कोट्या उ° । ५ क. °कत्र च° ।

सूर्याष्टिविश्वरुद्राष्टतिथ्यंशघ्नैः खखाग्निभिः ।
प्राग्भोदयाप्तैर्युक्तोनः सूर्योऽस्तार्कः शशाङ्कतः ॥ ३ ॥

इदानीमुदयास्तमयपरिज्ञानायास्तार्कानयनमाह—सूर्येति । सूर्याः द्वादश । अष्टिः षोडश । विश्वे त्रयोदश । रुद्रा एकादश । अष्ट प्रसिद्धाः । तिथयः पञ्चदश । एते चन्द्रादीनां भागाः । एतैः खखाग्निभिः शतत्रयं निहत्य प्राग्भोदयेन ग्रहस्थितराश्युदयविनाडीभिर्वा तत्सप्तमराशिविनाडीभिर्वा यथाप्राप्ताभिर्विभज्य लब्धं नाडिकादींस्तत्कालस्फुटार्के द्विधा न्यस्यैकस्मिन्प्रक्षिपेत् । अन्यस्माच्छोधयेत् । तावर्कावस्तार्कसंज्ञौ भवतः । [ प्राग्भोदय इति वचनमुभयत्रापि तत्कालग्रहस्य हारकत्वसंभवात् ] । हारकविभागस्तु यदा प्राक्कपाले दृश्यमानो द्रक्ष्यमाणो वा ग्रहो भवति तदा दृक्कर्मद्वययुतग्रहस्थितराशिविनाडिका हारः । यदा पुनः पश्चात्कपाले दृश्यमानो द्रक्ष्यमाणो वा ग्रहो भवति तदा ग्रहस्थितराशेः सप्तमराश्युदयविनाडिका हार इति षड्राशियुते ग्रहे सत्यस्तार्कोऽपि षड्राशियुतः स्यात् । एतदुक्तं भवति—यदा प्राक्कपाले दृश्यमानो ग्रहो मूढतां गच्छति प्राक्कपाले द्रक्ष्यमाण उदयं गच्छति वा तदा ग्रहस्थितराशौ दृक्कर्मद्वयं कृत्वा तस्य ग्रहस्य भागैः सूर्याष्टीत्यादिपठितैरुदयविनाडीभिश्चास्तार्कद्वयमानयेत् । यदा तयोरस्तार्कयोरन्तराले दृक्कर्मद्वययुतो ग्रहो विचरति तदाऽसौ ग्रहोऽस्तं गतो भवति । एवं प्राक्कपाले । यदा पुनः पश्चात्कपाले दृश्यमानोऽस्तं गच्छति पश्चात्कपाले द्रक्ष्यमाण उदयं गच्छति वा तदा षड्राशियुते ग्रहे दृक्कर्मद्वयं कृत्वाऽस्तार्कद्वयं चास्तमयविनाडिकाभिः स्वभागैश्चाऽऽनीय तयोरस्तार्कयो राशिषट्कं प्रक्षिपेत् । यदा षड्राशियुतयोरस्तार्कयोरन्तराले षड्राशियुतो दृक्कर्मद्वयसंस्कृतो ग्रहो भवति तदाऽसौ ग्रहोऽस्तं गच्छति । द्रष्टुमशक्यो भवतीत्यर्थः । अस्तार्कयोर्बहिर्गतिश्चेदुदयगतो भवति । एवं तत्कालग्रहतद्विक्षेपवदस्तार्केरुदयास्तमयकालो विज्ञेयः । एकेनैवास्तार्केणैव हि प्रयोजनं स्यात् ॥ ३ ॥

विक्षेपो भिन्नतुल्याशावलनघ्नः खखाङ्ककैः ।
हृतोंऽशास्तैर्युतोनः सन्ग्रहोऽस्तार्कान्तरेऽस्तगः ॥

---

१ क. इतरस्मा° । २ क. °राशिविं° । ३ क. °राशिविं° । ४ क. °भिश्चार्क° । ५ क. °हो विचरति । ६ क. °वतीति ।

अथ प्रकारान्तरेण दृक्कर्माऽऽह—विक्षेप इति। ग्रहस्योदयेऽस्तमये वा पारमार्थिकं वलनमानीय तद्वलनाङ्गुलं विक्षेपलिप्ताभिर्निहत्य खखाङ्कैः (९००) विभज्य लब्धानंशान्केवल एव ग्रहस्फुटे षड्राशियुते ग्रहस्फुटे वा संस्कुर्यात्। विक्षेपवलनयोर्द्विदिक्त्वे धनं कुर्यात्। एकदिक्त्वे ऋणं कुर्यात्। एवं कृतो ग्रहो विकृतदर्शनसंस्कारो भवति। अस्तार्कान्तरेऽस्तग इति वलनसंस्कृतो ग्रहोऽस्तार्कान्तरगतश्चेदस्तं गतो भवतीत्यर्थः। केचिदिमं श्लोकं विना पठन्ति। केचित्तु दृक्कर्मद्वययुते वलनसंस्कारमिच्छन्ति। तदसत्। यतो वलनकर्मणाऽपि दृक्कर्मद्वयमेव सिध्यति। अतो वलनकर्म वा दृक्कर्मद्वयं वैकमेव कुर्यात्। प्राक्कपालगतो ग्रहश्चेद्ग्रहस्योदयकाल एतत्कर्म कुर्यात्। पश्चात्कपालगतश्चेद् ग्रहस्यास्तमयकाल एतत्कर्म कुर्यात्। [अथ संकीर्णाधिकारः]।

अगस्त्यास्तोदयार्कांशाः सप्तशैलाः स्वराङ्ककाः।
अष्टघ्नविषुवच्छायाहीना युक्ताः स्वदेशजाः॥ ४॥

इदानीमगस्त्यमुनेरुदयास्तमयकालपरिज्ञानार्थमाह—अगस्त्येति। अष्टघ्नविषुवच्छायाङ्गुलैर्हीनाः सप्तशैलाः सप्तसप्ततिभागा यावन्तस्तावन्तो भागा भागीकृतस्य स्फुटार्कस्य यदा भवन्ति तदाऽगस्त्यस्यास्तमयकालो भवति। पुनरष्टघ्नविषुवच्छायाङ्गुलयुताः स्वराङ्ककाः सप्तनवतिर्भागा यावन्तस्तावन्तो भागा भागीकृतस्य स्फुटार्कस्य यदा भवन्ति तदाऽगस्त्यस्योदयकालो भवति। पुण्यत्वादेष कालः प्रदर्शितः॥ ४॥

चरतानांशषड्वर्गविश्लेषेणाक्षमाहतात्।
स्वविक्षेपादवाप्तेन स्वचरं संस्कृतं स्फुटम्॥ ५॥

अथ चरसंस्कारमाह—चरतानेति। सायनस्य चन्द्रस्यार्कवच्चरविनाडीरातीव पृथग्विन्यस्य तांस्तानैरेकोनपञ्चाशता विभज्य यल्लब्धं तच्चरतानांशो भवति। षड्वर्गः षट्त्रिंशत्। चरतानांशषड्वर्गयोरन्तरेण विषुवच्छायाङ्गुलगुणितां स्वविक्षेपलिप्तिकां विभजेत्। तत्र लब्धो विनाडिकात्मकश्चरसंस्कारो भवति। तेन संस्कृतं स्वचरं स्फुटं भवति। एतदुक्तं भवति—विक्षेपचरयोरुभयोरपि धनत्वे वा ऋणत्वे वा सति चरसंस्कारविनाड्योर्योगः स्फुटचरं भवति।

१ क. °योर्भिन्नदिक्त्वे। २ क. °हीनयु°। ३ क. °ना अष्टसप्ततिभा°। ४ क. °तिनवतिभागा°।

विक्षेपचरयोरेकस्य धनत्वेऽन्यस्य ऋणत्वे सति चरसंस्कारचरविनाड्योरन्तरं स्फुटचरं भवति । एवं चन्द्रादीनां स्फुटचरमानयेत् । अनेन चरसंस्कारेण पूर्वोक्तं दृक्कर्म च क्रियते ॥ ५ ॥

अन्तरेऽर्केन्दुदिनयोर्विनाड्यः पलभाल्पिकाः ।
यावत्तावद्व्यतीपातो वैधृतस्तु दिवानिशोः ॥ ६ ॥

अथ व्यतीपातकालपरिज्ञानार्थमाह—अन्तर इति । अर्केन्द्वोर्दिनप्रमाणयोरन्तरविनाड्यो यावत्कालं पलभाल्पिकाः पलभाङ्गुलेभ्योऽल्पतरा भवन्ति तावत्कालं व्यतीपातो नाम दोषः स्यात् । वैधृतस्तु दिवानिशोः—अर्केन्द्वोरेकस्य दिनप्रमाणमितरस्य रात्रिप्रमाणं चाऽऽनीय तयोर्दिननिशाप्रमाणयोरन्तरविनाड्यो यावत्कालं पलभाङ्गुलाल्पिका भवन्ति तावत्कालं वैधृतो नाम दोषः स्यात् । अत्र पलभाशब्देनाष्टांशहीनविषुवच्छायाङ्गुलमुच्यते । अतस्तस्मादल्पिकात्वं वेद्यम् । किंचार्केन्दुदिनप्रमाणयोरेकस्य क्रमाद्वृद्धिमत्त्वेऽन्यस्य क्रमाद् ह्रासवत्त्वे च सत्येव व्यतीपातः स्यात् । अन्यथा न व्यतीपातो दोषः । तथा दिननिशाप्रमाणयोरप्येकस्य क्रमाद् वृद्धिमत्त्वेऽन्यस्य क्रमाद् ह्रासवत्त्वे च सत्येव वैधृतदोषः । अन्यथा वैधृताभाव इति च वेदितव्यम् ।

" भिन्नायने तुल्यगोले लाटो व्यत्यासतोऽपरः " ।

इत्यनेन साम्यं क्रमाद् वृद्धिह्रासकल्पनयैव भवति । ' इन्नादूने दोषस्तयोर्भवेद् ' इत्यनेन साम्यं चाष्टांशहीनपलभाकल्पनयैवं भवति ] ॥ ६ ॥

विहितोभयदृक्कर्म तत्कालेन्दुविलग्नतः ।
शशाङ्कद्युगतं तस्मात्तद्दिनादर्कवत्प्रभा ॥ ७ ॥

इदानीं चन्द्रच्छायानयनमाह—विहितेति । तत्कालचन्द्र औदयिकं दृक्कर्मद्वयं कुर्यात् । स चन्द्रो विहितोभयदिक्कर्मा तत्कालेन्दुः पुनस्तत्काले प्राग्विलग्नं चाऽऽनयेत् । तद् विलग्नं तस्मिंश्चन्द्रे [ वि ] लग्ने चायनं प्रक्षिप्य सायनयोस्तयोर्लग्नेन्द्वोरन्तरालघटिकास्त्रिप्रश्नाध्यायोक्तविधिनाऽऽनयेत् । ता घटिकाः शशाङ्कद्युगतं भवति । तस्मात्तद्दिनादर्कवत्प्रभा तेन शशाङ्कद्युगतेन तस्य शशाङ्कस्य स्फुटदिनप्रमाणेन चार्कवत्प्रभा छाया भवति । एतदुक्तं भवति—चरतानांशेत्यादिना चन्द्रस्फुटचरमानीय तेन चरेण दिनदिनार्धप्रमाणावानीय तथा शशाङ्कद्युगतं

---

१ क. °यनैकदिक्त्वे ला° । २ क. °चायनचलनं प्र° ।

च लग्नेन्दुभ्यामानीय तैः सर्वैरर्कवत् “ पञ्चघ्नेष्टचरार्धेन ” इत्यादिविधिना चन्द्रच्छायामानयेत् । विपरीतच्छायायां तु च्छाययाऽऽनीता [ नत ] घटिका दिनार्धाद् विशोध्य शिष्टं शशाङ्कद्युगतं भवति[1] । तात्कालिकं कृतदृक्कर्मेन्दुं सूर्यं प्रकल्प्य शशाङ्कद्युगतं दिनगतं प्रकल्प्य पूर्ववदुदयलग्नमानयेत् । तत्काललग्नं भवति । पुनस्तत्काललग्नषड्राशियुतार्कयोरन्तरालघटिका आनयेत् । ता रात्रौ गता घटिका भवन्तीति । अत्र प्रथमविशेषविधिना चन्द्रोदये तत्कालेन्दुमानीय तमिन्दुमूहासिद्धेन स्थूलेनेन्दुद्युगतेन तद्भोगकालयुतेन तत्कालीकृत्य तस्मिन्नौदयिकं दृक्कर्मद्वयं कृत्वा पृथक् संस्थाप्य तत्कालच्छायया नतघटिकामानीय स्फुटतरं शशाङ्कद्युगतं चाऽऽनयेत् । पुनः पूर्वसिद्धस्थूलद्युगततत्स्फुटद्युगतयोरन्तरालघटिका आनयेत् । तया निहतां चन्द्रभुक्तिं पृथक्स्थितचन्द्रे युक्तितः स्वमृणं वा कुर्यात् । पुनः स्फुटतरं तत्कालेन्दुमानीय तद्वशाल्लग्नमानयेत् ॥ ७ ॥

द्व्यूनाः पक्षादितिथ्यर्धाः सस्वाङ्गांशाः सितासिते ।
विक्षेपाद् व्योमधृत्यंशसंस्कृतं वलनं स्फुटम् ॥ ८ ॥

इदानीं शृङ्गोन्नतिज्ञानार्थं चन्द्रबिम्बस्य सितकृष्णाङ्गुलानयनं वलनानयनं चाऽऽह—द्व्यूना इति । शुक्लपक्षे चन्द्रादर्कं विशोध्य शिष्टाल्लिप्तीकृताद् व्योमरसाग्निभिर्लब्धानि पक्षादितिथ्यर्धानि भवन्ति । तानि द्वाभ्यामूनानि कृत्वा तेषु स्वाङ्गांशं स्वषष्ठमांशं प्रक्षिपेत् । तानि रदमण्डले शुक्लाङ्गुलानि भवन्ति । कृष्णपक्षे तु षड्राशिहीनाच्चन्द्रादर्कं विशोध्य शिष्टादुक्तवल्लब्धमसितं कृष्णाङ्गुलमानं भवति । एवं शुक्लकृष्णाङ्गुलमानयेत् । पुनः पूर्ववत्पारमार्थिकं वलनमानीय तस्मिन् विक्षेपाद् व्योमधृत्यंशमशीत्यधिकशतांशं संस्कुर्यात् । तत्प्रकारस्तु शुक्लपक्षे विक्षेपवलनयोस्तुल्यदिक्त्वे व्योमधृत्यंशवलनयोर्योगं कुर्यात् । भिन्नदिक्त्वे व्योमधृत्यंशवलनयोरन्तरं कुर्यात् । कृष्णपक्षे तुल्यदिक्त्वेऽन्तरं कुर्यात् । भिन्नदिक्त्वे योगं कुर्यात् । कृष्णपक्षे क्षेपस्य व्यत्यासेन दिगित्यर्थः । एवं संस्कृतं शृङ्गोन्नत्यां स्फुटवलनं भवति । किंत्वर्केन्द्वोर्मध्यभागस्थराशिभागे ग्रहं परिकल्प्य तस्य वलनानयनं कार्यम् । द्विसहितपक्षादितिथ्यर्धैः । गुणितैरेकादशभिर्विक्षेपादाप्तं व्योमधृत्यंशमिति प्रकल्प्यम् । कृष्णपक्षे तिथ्यर्धमेष्यं स्यादिति । तथा च कश्चिदाह—

अर्केन्द्वोर्मध्यभागस्थं कल्पयित्वा ग्रहं ततः ।
वलनं साधयेत्स्पष्टं शृङ्गोन्नत्यां यथाविधि ॥

---

१ क. °ति । पश्चात्कपाले तु नयनघटिका दिनार्धे प्रक्षिप्य दृष्टं शशाङ्कद्युगतं भवति ।

तस्मिन् वियुक्तपक्षादितिथ्यर्धगुणितैर्भवैः ।
लब्धं विक्षेपतः स्वर्णं कुर्यात्तद्वलनं स्फुटम् ॥
वलनक्षेपयोस्तुल्यदिक्त्वे स्वमृणमन्यथा ।
कृष्णपक्षे तु तिथ्यर्धमेव्यं स्वर्णत्वमन्यथा ॥
इन्दोरेवेह विक्षेपो नार्केन्द्वोर्मध्यगस्य तु ।
विधीयते हि वलनं प्राग्भागे रदमण्डले ॥ इति ॥ ८ ॥

**बिम्बापरदिशो भागात्प्राग्वृद्धिः शुक्लकृष्णयोः ।**
**शुक्लान्ताद्बिम्बमध्यस्पृक्छेदाग्रच्छेदनं छिदा ॥ ९ ॥**

इदानीं शृङ्गोन्नतिपरिलेखकरणमाह—बिम्बापरेति । बिम्बस्यापरभागात्प-श्चिमभागात्प्राग्वृद्धिः शुक्लकृष्णयोर्भवति । एतदुक्तं भवति—षोडशाङ्गुलसूत्रेण रदमण्डलमालिख्य पूर्वापरगां दक्षिणोत्तरगां च रेखां कृत्वा वृत्तपूर्वभागाद्वलनं नीत्वा वलनानुसारिण्यौ पूर्वापरदक्षिणोत्तररेखे कुर्यात् । पुनर्वलनसाधितपूर्वापर-सूत्रपश्चिमाग्रात्पूर्वतः सितमानं कृष्णमानं वा तत्सूत्रे नीत्वा तत्र बिन्दुं कृत्वा पुनर्वलनसाधितदक्षिणोत्तरसूत्राग्रयोश्च बिन्दू कृत्वा त्रिशर्कराविधानेन तद्बि-न्दुत्रयस्पृग्वृत्तैकदेशमालिखेत् । तत्र सितकृष्णबिन्दुतोऽपरभागे वृत्तद्वयान्तरं सितकृष्णयोः संस्थानं भवति । तदुक्तम्—“ शुक्लान्ताद् बिम्बमध्यस्य च्छेदाग्र च्छेदनं छिदा ” इति । बिम्बमध्यस्य च्छेदाग्रं दक्षिणोत्तरसूत्राग्रद्वयं शुक्लबिन्दु-तदग्राणां छेदनं छिदा छेदयोग्येन सूत्रकाष्ठादिना कुर्यादित्यर्थः । शुक्लग्रहणं कृष्णस्याप्युपलक्षणम् ॥ ९ ॥

**मानसाख्यं ग्रहज्ञानं श्लोकषष्ट्या मया कृतम् ।**
**भवन्त्यतोऽयशोभागाः प्रतिकञ्चुककारिणः ॥ १० ॥**

इदानीमुपसंहरणार्थं श्लोकमाह—मानसाख्यमिति । मानसं नाम ग्रहज्ञानं ग्रह-गतिज्ञानसाधनं शास्त्रं श्लोकषष्ट्या श्लोकानां षष्ट्या मया कृतं रचितम् । अतोऽ-स्मिन्मानसे ये प्रतिकञ्चुककारिणस्तेऽयशोभागाः केवलमयशोभाजना एव भवन्ति । एतदुक्तं भवति—यद्यपि भास्करादिभिः प्रदर्शितान्मन्दोच्चादेरत्रोक्तस्य मन्दोच्चादेः किंचिद्भेदः स्यात्तथाऽपि शास्त्रान्तरानुसारित्वाद् द्रष्टिसाम्याच्चैत-त्सर्वैः पठितव्यमित्यर्थः ॥ १० ॥

व्याख्यानं मानसस्यैतत्सुचिरं तिष्ठतु क्षितौ ।
हरिपादाब्जयुगले सततं मानसं च मे ॥

इति पारमेश्वरे मानसव्याख्याने संकीर्णाधिकार-श्चतुर्थोऽध्यायश्च समाप्तः ॥

---

१ क. °भाजः प्र° ।